# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]




२४ वर्षे ३ अङ्कः

वै० संवत् २०२६

प्रकाशनतिथिः

मार्गशीर्षपूर्णिमा, वै० सं० २०२६

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]

प्रधानसम्पादकः

**श्रीबदरीनाथशुक्लः**

सहायकसम्पादकः

**उमाशङ्करत्रिपाठी**




**२४ वर्षे ३ अङ्कः**

# विषयानुक्रमणिका





# सम्पादकीयम्

सारस्वतीसुषमायाश्चतुर्विंशवर्षस्य तृतीयमङ्कं पाठकानां विदुषां समक्षमुपनयतो मे महान् मानसोल्लासः। अस्मिन्नङ्के पूर्वसूचनानुसारेणादौ प० श्रीरघुनाथशर्मणां विशिष्टव्याख्यानस्य प्रथमो भागः 'व्याकरणदर्शने शब्दसामान्यदर्शनम्' इत्याख्यः समुपनिबद्धो विद्यते। तदनु विभिन्नानां विदुषामन्ये चत्वारो लेखाः सन्ति, अन्ते च राष्ट्रभाषया निबद्धेन सङ्कलनेन महापुरुषाणां जीवनसम्बद्धानि काश्याः स्थलानि विज्ञापितानि सन्ति। पूर्वाङ्केष्विवास्मिन्नङ्केऽपि लेखानां संक्षिप्तः परिचय उपन्यस्तो वर्तते, येनाध्येतारो लेखविषयाणां सामान्यपरिचयं प्राप्य विशेषज्ञाने जातोत्कण्ठा लेखाध्ययने प्रवर्तेरन्।

## १. प्रथमो लेखः

अयं लेखः पण्डितवरेण्येन श्रीरघुनाथशास्त्रिणा वाराणसेयसंस्कृतविश्वविद्यालयस्य दशमदीक्षान्तमहोत्सवप्रसङ्गे श्रीगङ्गानाथझा-प्रवचनमालायां प्रदत्ताद् विशिष्टव्याख्यानादत्रोपनिबद्धः। अस्मिन् लेखे विदुषा लेखकेनेदं प्रतिपादितम् यद् व्याकरणदर्शनमतिप्राचीनं ब्रह्म-बृहस्पति-देवेन्द्र-भरद्वाजर्षिप्रभृतिपरम्पराप्राप्तं कालक्रमेण मध्ये लुप्तप्रायतां गतं तत्रभवता भर्तृहरिणा त्रिस्रोतसः प्रवाह इव विश्वं पुनानं वाक्यपदीये त्रिभिः काण्डैस्त्रिधा विभक्तम्। आद्यं ब्रह्मकाण्डम्, द्वितीयं वाक्यकाण्डम्, तृतीयं पदकाण्डमिति। प्रथमे काण्डे जगतः स्फोटात्मकस्याक्षरब्रह्मणो विवर्ततां प्रतिपाद्य शब्दसामान्यं विस्तरेण विशदीकृतम्।

स्फोटात्मकं शब्दब्रह्म कालाख्याया ब्रह्मशक्तेः सहकारेण स्वतो भिन्नाभिन्नत्वाभ्यामनिर्वाच्ययाऽनादिशक्तया सृज्यमानप्राणिनां पूर्वजन्मार्जितकर्मपरिपाकानुरोधेन भोक्तृभोग्यभोगात्मकविश्वात्मना विवर्तते। शब्दब्रह्मप्राप्तिरेव परमः पुरुषार्थः। तत्प्राप्त्युपायो वेदराशिः। तस्य ऋग्यजुःसामाथर्वरूपाश्चत्वारो मुख्या विभागाः। प्रत्येकं कर्मणः सर्ववेदशाखाप्रत्याय्यतया कर्मसम्पादने समेषामुपयोगः। वेद इव वेदमूला मन्वादिस्मृतयोऽपि प्रमाणं सर्वहितसाधननिदानं च। दर्शनभेदा अपि वेदादेव विनिर्गताः।

व्याकरणं चाङ्गिनो वेदस्य मुखमिव प्रधानमङ्गम्। तच्च शब्दब्रह्मणो ज्ञानस्य ऋजुर्मार्गः। तस्य प्रधानाः प्रथमे विभागास्त्रयः—सूत्राणि, वार्तिकानि, भाष्यं च। तानि च क्रमेण महामुनिभिः पाणिनिकात्यायनपतञ्जलिभिः प्रणीतानि।

शब्दः, अर्थः, तयोः सम्बन्धश्चैते त्रयोऽपि व्याकरणदर्शने नित्याः। शब्दार्थसम्बन्धफलानां प्रत्येकं चातुर्विध्यादत्र दर्शनेऽष्टौ पदार्थाः स्वीकृताः। तथा हि--शब्दो द्विधा, अन्वाख्येयः प्रत्याख्येयश्च। अर्थोऽपि द्विविधः—अपोद्धारः स्थितिलक्षणश्च। सम्बन्धोऽपि द्विधा–कार्यकारणभावो योग्यता च। फलमपि द्विविधम्—अदृष्टमर्थबोधश्च।

व्याकरणदर्शने प्रत्यक्षादिव्यतिरिक्तमदृष्टमपि पञ्चमं प्रमाणम्। व्याकरणशास्त्रं च शब्दसाधुत्वं बोधयद् "एकः शब्दः सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग् भवति" इति भणित्यनुसारेण जनजातेर्महोपकारकम्। अवस्थादेशकालानां भेदाद् भावानां शक्तयो भिद्यन्ते, ताश्च न तर्केण समधिगम्याः, किन्त्वागमेनैव। आगमश्च व्याकरणद्वारैव सुग्रहः। व्याकरणशास्त्रस्यास्ति कार्यद्वयम्। स्फोटाख्यस्य शब्दब्रह्मणः प्रतिपादनम्, ध्वन्यात्मकस्य शब्दस्य स्वरूपनिष्पत्तिप्रकारनिरूपणं च। व्याकरणेन साधुतया प्रतिपादितो ध्वन्यात्मकः शब्दः कण्ठताल्वाद्यभिघातव्यक्तः श्रोत्रं संस्करोति। संस्कृतं च श्रोत्रं शब्दोपलब्धेर्द्वारं भवति। श्रोत्रेणोपलम्भितो ध्वन्यात्मकः शब्दः स्फोटं व्यनक्ति। व्यक्तः स्फोटोऽर्थं प्रत्याययति। प्रतीतोऽर्थो व्यवहाराय कल्पते।

ध्वन्यात्मकशब्दस्योपादानकारणानि मतभेदेन भिन्नानि। केचिद् वायोरणूनां केचिच्च ज्ञानस्य शब्दोपादानतां मन्यन्ते। ज्ञानमेव शब्दत्वमापद्यत इति भाष्यकारमतम्। वायोरणवः शब्दतामापद्यन्त इत्यपरेषां मतम्।

शब्दाश्रिता शक्तिरेव विश्वस्य जननी। तथा हि--सर्वं जगद् वाच्यवाचकोभयात्मकं सूक्ष्माद् वाक्तत्त्वादेव बुद्ध्यादिपरम्परया प्रादुर्भवति, तत्रैव चान्ते प्रलीयते। तस्य तत्त्वज्ञानसम्पादनद्वारा मनुष्यस्य मोक्षाख्यपरमपुरुषार्थसम्पादनमेव व्याकरणशास्त्रस्य चरमं लक्ष्यम्। तत्सम्पत्तिश्च ध्वन्यात्मकसाधुशब्दप्रतिपादनमुखेनैवेत्यादिवेद्यजातमत्र लेखे विशदीकृतं विपश्चितां चेतश्चमत्काराय सम्यक् क्षमम्।

## २. द्वितीयो लेखः

अयं लेखः 'साहित्यसम्प्रदाये तात्पर्यस्वरूपम्' इति नाम्ना डा० रेवाप्रसादद्विवेदिना लिखितः। लेख एष (१) तात्पर्यस्याधिकरणम्, (२) तात्पर्यस्य विषयः, (३) तात्पर्यस्य स्वरूपमित्येतेषु त्रिषु स्तम्भेष्वाधृतः।

तत्रादौ स्तम्भारोहणभूमिकायां काव्यस्य शब्दार्थशरीरताम्, तात्पर्यशब्दस्य 'तत् परं प्रतिपाद्यं यस्य स तत्परः; तस्य भावस्तात्पर्यम्' इति व्युत्पत्तिं च प्रदर्श्य लेखकेन शब्दार्थयोर्मध्ये

कतरस्तावत् 'तत्पर' शब्दस्य तद्घटकस्य 'पर'शब्दस्य तदुभयोर्वा अर्थः, शब्दार्थौ, उभौ वा—'तत्पर' 'पर' इति द्वयोर्वेत्यर्थः; तात्पर्यं शब्दार्थयोः प्रत्येकं पर्याप्तं व्यासज्यवृत्ति वा, तात्पर्यस्य शब्दे पर्याप्तौ तात्पर्याधिकरणतावच्छेदकं शब्दगतं पदत्वं वा, वाक्यत्वं वा, पदत्ववाक्यत्वोभयं वा; पर्याप्तौ तात्पर्याधिकरणतावच्छेदम् अर्थगतमभिधेयत्वं वाऽनभिधेयत्वं वा, तदुभयं वा; व्यासज्यवृत्तित्वे शब्दगतयोरुक्तधर्मयोः किमप्येकम्, अर्थगतयोरुक्तधर्मयोश्चैकमित्येवं किमपि धर्मद्वयं वा, शब्दगतमुक्तमुभयम्, अर्थगतं चोक्तमुभयमित्युदीरितं धर्मचतुष्टयं वा तात्पर्याधिकरणतावच्छेदकमित्येवं तात्पर्याधिकरणविषये ।

शब्दस्य वाचक-लक्षक-व्यञ्जकभेदेन त्रिविधतया तदर्थभूतः काव्यार्थस्तदात्मा तात्पर्यविषयोऽपि वाच्य-लक्ष्य-प्रतीयमानभेदेन त्रिविध इत्येवं तात्पर्यविषयस्य बाहुविध्यं वर्णयित्वा किं तावत् तात्पर्यविषयतावच्छेदकं वाच्यत्वं वा, लक्ष्यत्वं वा, प्रतीयमानत्वं वेत्यादिरूपेण तात्पर्यविषयविषये, किं तावत् तात्पर्यस्वरूपं शक्तिर्वा वस्त्वन्तरं वेत्येवं तात्पर्यस्वरूपविषये च जिज्ञासां प्रकटयता लेखकेन प्रथमं स्तम्भमभिरुह्य विभिन्नानां साहित्यशास्त्राचार्याणामभिप्रायभेदाननुसरता शब्दस्यार्थसामान्यं प्रति, समेषां प्राथमिकार्थानां पार्यन्तिकमर्थं च प्रत्युपसर्जनतया शब्दोऽर्थश्चेत्युभयमेव तात्पर्याधिकरणमिति निर्णयता, शब्दत्वार्थत्वयोरुभयोस्तात्पर्याधिकरणतावच्छेदकत्वप्रतिपादनेन शब्दत्वव्याप्ये पदत्ववाक्यत्वेऽर्थत्वव्याप्येऽभिधेयत्वानभिधेयत्वे च तात्पर्याधिकरणतावच्छेदकीभवनाय सावकाशत्वप्रदानेन कृतार्थयता लेखकेन 'अर्थः शब्दो वा तमर्थं व्यङ्क्तः' इति ध्वनिकारिकाभागस्थस्य 'वा'शब्दस्य शब्दार्थयोर्गौणप्रधान्यापेक्षया विकल्पार्थकतामाश्रित्य शब्देऽर्थे च प्रत्येकं तात्पर्यस्य पर्याप्तिः 'व्यङ्क्तः' इति क्रियापदघटकद्विवचनमनुरुध्य काव्ये शब्दार्थयोः साहचर्यनित्यताऽपेक्षया तात्पर्यस्य तयोर्व्यासज्यवृत्तिता चेत्युभयमेव समर्थितम् ।

द्वितीयं स्तम्भमारुह्य तात्पर्यविषयं विवेचयता लेखकेन विभिन्नाचार्याणां तद्विषयकमतानीत्थमुपस्थापितानि—

१. प्राधान्येन प्रतिपिपादयिषितः कविसंरम्भगोचरीभूतः, चमत्कारातिशयपात्रभूतो वा ध्वन्यमानोऽर्थ एव तात्पर्यविषयो ध्वनितात्पर्ययोरैक्यादित्यानन्दवर्धनः ।

२. यदा वाक्यं स्वार्थेऽप्रतिष्ठमविश्रान्तं चान्यं कमप्यर्थमभिप्रैति, तदा सोऽन्योऽर्थो वाक्यस्य तात्पर्यविषयभूतोऽर्थो भवति । यदा च वाक्यं स्वार्थे प्रतिष्ठितं विश्रान्तं च सदपि कञ्चिदन्यमर्थं विवक्षति, तदा सोऽन्योऽर्थस्तस्य ध्वन्यमानोऽर्थो भवति । इत्थं ध्वन्यमानोऽर्थोऽन्यः, तात्पर्यविषयश्चार्थोऽन्य इति केचित् ।

३. वाक्याद् यमर्थं विदित्वा प्रतिपाद्यः पुरुषो विश्राम्यति स एव वाक्यस्य तात्पर्य-विषयभूतोऽर्थ इति न युक्तम् ; किन्तु यमर्थं वक्ता प्रतिपिपादयिषति, अर्थात् प्रतिपाद्येन पुंसा यस्मिन्नर्थे प्रतिपन्ने वक्ता विश्राम्यति स एवार्थो वाक्यस्य तात्पर्यविषयभूतोऽर्थः। स च पार्यन्तिक एवार्थ इति ध्वनितात्पर्ययोरैक्यमेवेति धनिकः।

४. वाक्यार्थस्त्रिविधः—अभिधीयमानः, प्रतीयमानो, ध्वनिरूपश्च। वाक्यस्य यथाश्रुतोऽर्थ आद्यः। यथा 'गौर्गच्छति' इति वाक्यस्य गमनव्यापृतो गौः। यथाश्रुतादधिको द्वितीयः। यथा 'अस्य गृहे भुङ्क्ष्व चेद् विषं भुङ्क्ष्व' इति वाक्यात् प्रतीयमानः 'अस्य गृहे भोजनं विषभोजनम्, अतो न कर्तव्यम्' इत्यर्थः। काव्यादिवाक्यतो वाक्यार्थप्रतीतेरुत्तरं प्रतिपद्यमानोऽर्थस्तृतीयः। यथा 'प्राप्तश्रीः' इत्यादिपद्यतो विज्ञायमानं वर्णनीये राजनि विष्णुतो वैशिष्ट्यम्। एवञ्च तात्पर्यविषयस्यैवार्थस्य क्वचिद् ध्वनिरूपतया तात्पर्यं व्यापकम्, ध्वनिश्च व्याप्य इत्येवं ध्वनितात्पर्ययोः सापेक्ष पार्थक्यमपार्थक्यं चेत्युभयमिति समन्वयवादी भोजराजः।

५. विषयभेदाद् वृत्तयो भिद्यन्ते। ताश्च अभिधा, लक्षणा, तात्पर्यं ध्वनिश्चेति चतस्रः। तथा च तात्पर्यविषयोऽभिधेयात्, लक्ष्याद् ध्वन्यमानाच्च भिन्न इत्यभिनवगुप्तः।

६. तात्पर्यं न काचिच्छब्दवृत्तिः, किन्त्वनुमानरूपं तत्। वाक्यस्य यथाश्रुतार्थप्रतीत्युत्तरं योऽर्थः परैस्तात्पर्यगम्यो मन्यते, स वस्तुतोऽनुमानगम्यः, अतो वाक्यार्थबोधोत्तरमनुमानेन गम्यमानो वाक्यस्य विवक्षितार्थ एव तात्पर्यविषय इति महिमाचार्यः।

७. तात्पर्यं द्विरूपम्—अन्वयरूपं विधेयरूपं च। आद्यमभिनवगुप्तानुमतम्, द्वितीयं मीमांसकसम्मतम्—तत्राभिहितान्वयवादस्य दृष्ट्या विचार्येत, अन्विताभिधानवादस्य वा दृष्ट्या विचार्येत, उभयथैवेदमायाति 'यदि शब्दश्रुतेरन्तरं यावानर्थः प्रतिभासते तावति शब्दस्यैवाभिधा-व्यापारो मन्यते तदा लक्षणादिर्विलुप्येत, तात्पर्यस्यापि चाभिधात्वमेव प्रसज्येत'। अतो नून-मिदमभ्युपेयं यदभिधा-लक्षणा-तात्पर्य-व्यञ्जनानां विषया भिन्ना इति। व्यञ्जनाविषया विषयात् तात्पर्यविषयोऽन्य इति मम्मटः।

८. तात्पर्यविषयो ध्वनिविषयादन्य इति मम्मटमतमवश्यमास्थेयम्। परं तयोस्तादृश-मेवान्यत्वं यादृश ब्राह्मणब्रह्मचारिणोः। अतो ध्वनिविषयस्तात्पर्यमहाविषयगर्भगत एवेति भोजराजमते रुचं दधानो भावप्रकाशनकारः शारदातनयः।

९. तात्पर्यं महत्पदतया ध्वन्यमानमपि परिस्पृशतीति साहित्यमीमांसाकारः।

१०. अभिधा-तात्पर्य-लक्षणावृत्तीनां स्वं स्वमर्थमवबोध्य उपरतौ सत्यां सम्भवतो रसादिबोधस्य सम्पादिका या वृत्तिः सा व्यञ्जना। सा यथा अभिधा-लक्षणाभ्यां भिन्ना, तथैव

तात्पर्यादपि भिन्ना । अतो ध्वन्यमानोऽर्थोऽन्यः, तात्पर्यविषयश्चार्थोऽन्य इति साहित्यदर्पणकारो विश्वनाथः ।

११. तात्पर्यार्थोऽपि व्यङ्ग्यार्थ एव, न पुनः पृथग्भूतः । 'तात्पर्यार्थः' इत्यत्र वक्तृबुद्धिसन्निधापितो वाक्यावगम्यो वाक्यार्थो रसादिरूपस्तच्छब्देनोच्यते । तस्मिन् परास्तत्पराः, तदासक्तास्तद्विषया इत्यर्थः । तेषां भावस्तात्पर्यमित्येवं व्यञ्जनावेद्योऽर्थ एव तात्पर्यविषय इति विद्यानाथः ।

सर्वेषामेषां मतानां सम्भूय पर्यालोचनया अभिधेय-प्रतीयमान व्यज्यमानेषु त्रिष्वेव तात्पर्यविषयतालाभेन अभिधेयत्वस्य अभिधेयत्वव्याप्ययोः प्रतीयमानत्व-व्यज्यमानत्वयोश्च यथावसरं तात्पर्यविषयतावच्छेदकत्वयोग्यता प्रतीयते ।

तृतीयं स्तम्भमाश्रित्य तात्पर्यस्वरूपं निरूपयता लेखकेन साहित्यसम्प्रदायप्रसिद्धं तद्विषयकं मतत्रयम्—( १ ) वाक्यात्मकस्य शब्दस्य शक्तिस्तात्पर्यम् । ( २ ) प्राधान्येन प्रतिपिपादयिषा तात्पर्यम् । ( ३ ) वाक्यसहकारिभूतो मननाध्यवसायस्तात्पर्यम् । इत्येवं रूपं प्रदर्श्य काव्यस्य पार्यन्तिको रसादिरूपोऽर्थस्तात्पर्यमहिम्नैव शब्दार्थशरीरकेण काव्येन काव्यकर्मविदां मनीषिणां मतिपदवीमुपनीयन्ते, न तदर्थं शब्दनिष्ठतया व्यञ्जनाख्यस्य वृत्यन्तरस्यावलम्बनं मनागप्यावश्यकमिति सुनिपुणं प्रतिपादितम् ।

## ३. तृतीयो लेखः

अयं लेखः 'सदाचारस्मृतिसमालोचनम्' इति नाम्ना डा० अशोकशास्त्रिणा लिखितः । अस्मिन् लेखे प्रसिद्धाः प्राचीना दर्शनशास्त्रपण्डिताः स्मृतिग्रन्थरचनायां बद्धादरा न दृश्यन्तेऽतः 'सदाचारस्मृतिः' ग्रन्थो 'मध्वाचार्य'प्रणीततया न स्वीकर्तुं शक्य इति केषाञ्चिन्मतस्य निराचिकीर्षया लेखकेन 'कलिकाता ऐसियाटिक सोसाइटी' नाम्नि पुस्तकागारे लब्धस्य 'सदाचारस्मृति'-ग्रन्थस्य समाप्तिस्थलीयमुल्लेखम्, महामहोपाध्यायहरप्रसादशास्त्रिणस्तद्विषये वक्तव्यम्, बीकानेरनरेशपुस्तकागारे विद्यमानायाः श्रीराजेन्द्ररायरचितायाः संस्कृतपुस्तिकासंवादपत्रिकाया वाक्यं चाधृत्येदं निर्णीतं यत् 'सदाचारस्मृति'नामा ग्रन्थो मध्वाचार्येणानन्दतीर्थेन निर्मितस्तत्काले भृशं प्रचलित आसीत् । ग्रन्थोऽयं न केवलं मध्वसम्प्रदाय एवादृत आसीत्, अपि तु सर्वसाधारणजनतायामप्यासीदिति । तदुपरि सम्प्रदाया इत्यपि लेखकेन कृतेभ्यष्टीकाटिप्पण्यादिभ्यो विज्ञायते । लेखे सदाचारस्मृतिटीकाकारस्य नारायणपण्डितस्य तत्पितुर्हितार्थसूरेश्चापि पर्याप्तः परिचयः प्रदत्तोऽस्ति । ग्रन्थस्यान्तरपरीक्षणद्वारा लेखकेन ग्रन्थस्यास्य वैष्णवस्मृतित्वम्,

आचारप्रधानदार्शनिकतत्त्वप्रधानभेदेन भागद्वयवत्त्वं चाभिहितम्। लेखकेनेदमपि समीचीनतया साधितं यन्मध्वाचार्यो यद्यपि तान्त्रिकवैष्णवतया प्रमाणितो नास्ति, तथापि तत्कालिकीं तान्त्रिकक्रियाकलापे जनानुरक्तिं ध्यायन् स प्रकृतं ग्रन्थं तथा प्रणिनाय यथा तान्त्रिकाणामप्यादरप्राप्तिस्तस्य दुर्घटा नाभूत्। प्रातः शय्यात्यागाद् रात्रौ शय्याग्रहणपर्यन्तं पालनीयेषु विविधेषु सदाचारेषु विष्णोःस्मरणस्यावश्यकता ग्रन्थे प्रतिपादितास्ति। सर्वमिदं संक्षेपेण ब्रुवता लेखकेन 'सदाचारस्मृति'ग्रन्थं मूलरूपेणात्र समुपन्यस्य पाठकानां तद्विषयकरुचिपरिचययोरुपचितये स्तुत्यः प्रयत्नः कृतोऽस्ति।

## ४. चतुर्थो लेखः

एष लेखः 'शाङ्करं तान्त्रिकं च वाङ्मयम्' (Śaṅkara And Tantra Literature) इति नाम्ना विश्वविद्यालयोपकुलपतिना डॉ० गौरीनाथशास्त्रिमहोदयेन लिखितः।

लेखेऽस्मिन्निदं प्रतिपादितमस्ति यद् दार्शनिकानामग्रगण्यः शङ्कराचार्य औपनिषदस्य सच्चिदानन्दब्रह्मणः साक्षात्कारो ज्ञानसाध्य इत्येतस्याद्वैतवेदान्तसिद्धान्तस्य प्रवर्तकः। तन्मतानुसारेणाद्वितीयं ब्रह्मैव एकं परमार्थसत्, जगच्च सर्वं तत्रानाद्यविद्ययाऽध्यारोपितम्। यावच्चाविद्या तत्त्वज्ञानेन नोच्छिद्यते, तावद् ब्रह्मणः पूर्णो यथार्थश्च साक्षात्कारो न जायते। परमार्थदृष्ट्या असदपि जगद् व्यवहारदृष्ट्या सद्। अतोऽद्वैतवादेऽपि जगद्व्यवहारस्य नानुपपत्तिः। आचार्यो हि वस्तुनस्त्रिविधां सत्तां मन्यते--पारमार्थिकीम्, व्यावहारिकीम्, प्रातिभासिकीं च। आद्या ब्रह्मणः, द्वितीया व्यावहारिकस्य जगतः, तृतीया शुक्तिरजतादेः। तृतीयसत्ताधरः प्रतिभासकालमात्रोपजीवी, द्वितीयसत्ताधरो यावद् ब्रह्मसाक्षात्कारो नोदेति तावत् कालजीवी, आद्यसत्ताधरं ब्रह्म च त्रिकालाबाध्यम्।

आचार्यमते तत्त्वविचार उपासना चेति साधनाया मार्गद्वयम्। बौद्धजैनदर्शनयोरिव तद्दर्शनेऽपि ज्ञानमार्गस्य भक्तिमार्गस्य चाभ्युपगमः। उपासनायाः फलं भूतशुद्धिश्चित्तशुद्धिश्च। शुद्धयोश्चानयोः फलं ज्ञानम्। योगतन्त्रयोः षट्चक्रचर्चा अनयोरुभयोः शुद्धयोरनुगुणैव। तन्त्रसिद्धान्तानुसारेण कुण्डलिनीशक्तिर्यावत् सुप्ता तावज्जीवोऽपि सुप्तः। तस्या जागर्तौ जीवो जागर्ति। कुण्डलिनी घटीयन्त्रवद् दक्षिणं वामं चावर्तते। यदा सा जागर्ति, तदा तदावर्तं ऊर्ध्वाभिमुखो भूत्वा ललाटस्थमाज्ञाचक्रमुपसर्पति। इदानीमेव सत्यायाः साधनायाः प्रारम्भः। यदा च सा पूर्णतां व्रजति, तदा कुण्डलिनी सहस्रारचक्रं प्राप्य निष्क्रिया भवति। शिवशक्त्योः पूर्णाभिव्यक्तिर्जायते। ब्रह्मरन्ध्रे तयोः सामरस्यं सम्पद्यते, अध्यात्मपथिकः समग्रया रश्मिमालया समुद्भासिते सूर्यमण्डले शाश्वतमानन्दमश्नुते च।

यावत् साधक उपासनया भूतशुद्धिं चित्तशुद्धिं च न सम्पादयति, तावच्चतुर्थभूमेरूर्ध्वं नाधिरोहति, जीवन्मुक्तिं च न लभते। ब्रह्मवित्त्वम्, ब्रह्मविद्वरीयस्त्वं ब्रह्मविद्वरिष्ठत्वं चेति पञ्चमषष्ठसप्तमभूमयोऽशुद्धभूतचिन्तानां साधकानां दुरारोहा एव।

आचार्यशङ्करस्य जीवनेन 'सत्यपि भेदापगमे -- नाथ ! तवाऽहम्, न मामकीनस्त्वम्' इत्यादिवचनेन चेदं सुस्पष्टं यद् यद्यपि भक्तभगवतोः कश्चन तात्त्विको भेदो नास्ति, तथापि पराभक्तिरसैकनिष्पत्तये भेदस्य किञ्चिद्रूपं तयोरवतिष्ठत एव।

आद्यशङ्कराचार्यो भारतस्य चतसृषु दिक्षु चतुरो मठान् संस्थाप्य तत्रात्मनः प्रधानान् चतुरः शिष्यान् न्ययुङ्क्त। इत्थं तदीया शिष्यपरम्परा प्रत्यतिष्ठत्। तेष्वनेकैरनेके स्तोत्रग्रन्थाः, दर्शनग्रन्थाश्च शङ्कराचार्यनाम्ना प्रणीताः साधनाग्रन्था किन्त्वेनावन्निर्विवादं यदाद्यशङ्कराचार्यो विशुद्धेन ज्ञानमार्गेण आत्मनोऽद्वैतसिद्धान्तस्य बहूनां दुर्लभत्वं चिन्तयित्वा ब्रह्मसूत्राणामुपनिषदां भगवद्गीतायाश्च भाष्यैः सह भक्तिमयान् अनेकान् स्तोत्रग्रन्थान् तन्त्रग्रन्थांश्चापि रचयामास। न केवलमेतावन्मात्रम्, अपि तु स दुर्दमैस्तर्कैः प्रमाणैश्च तदानीं प्रतिष्ठितं बौद्धानां क्षणिक-विज्ञानाद्वयवाद निरस्य जनमनस्तो बौद्धधर्माभिनिवेशं च विधूय वैदिकं मार्गमपि सर्वात्मना पुनः प्रतिष्ठापयामास।

लेखमुपसंहरता श्रीशास्त्रिणा सम्यगिदं स्पष्टीकृतं यद् यद्यपि शङ्कराचार्यो ब्रह्माद्वयवादी, जगन्मायिकत्ववादी ज्ञानमार्गप्रवर्तकश्च, तथापि स जगत्सत्यत्वे निष्ठावतां बहूनां समुद्धार-मभिलक्ष्य तदीयपात्रतानुसारेण तेभ्य उपासनामार्गं भक्तिमार्गं चाप्युपदिदेश। अतस्तदनुसारेण ज्ञानमार्ग इव भक्तिमार्गोऽप्येकः शास्त्रसम्मतः साधनामार्ग इति निर्विवादम्।

## ५. पञ्चमो लेखः

एष लेखः सामूहिको विद्यते। विश्वविद्यालयकुलपतिभिः उत्तरप्रदेशराज्यपालैः महा-महिमशालिभिः श्रीविश्वनाथदासमहाभागैर्निर्दिष्टेन तदानीन्तनेन उपकुलपतिना पं० सुरति-नारायणमणित्रिपाठिमहोदयेन कतिपयविदुषामेकां समितिं निर्माय तदुपरि अयं मनोन्यस्तो यत् काश्याः कानि स्थलानि केषां महापुरुषाणां जीवनैः सम्बद्धानीत्येष विषयोऽन्विष्य निर्णीयेत, तदनुसारमयं लेखः सङ्गृहीतो विश्वविद्यालयेन कुलपतिमहोदयानां पार्श्वे प्रहितश्च। स एवैष राज्यपालसचिवेन श्रीभटनागरमहोदयेन प्रकाशनार्थं विश्वविद्यालयसविधे प्रेषितो वर्तमानोप-कुलपतेः डॉ० गौरीनाथशास्त्रिमहोदयस्यानुमत्या पाठकानां मनोरञ्जनाय प्रकृतविषयकबोध-सम्पादनाय चात्र राष्ट्रभाषया प्रकाशितः।



# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

२४ वर्षः } मार्गशीर्षपूर्णिमा, संवत् २०२६ { ३ अङ्कः

# व्याकरणदर्शने शब्दसामान्यदर्शनम्*

श्रीरघुनाथशर्मा, वेदान्तविभागाध्यक्षचरः, वा० सं० वि० वि०, वाराणसी

संश्रये जगदालम्बं निरालम्बं परं महः ।
पुरा लम्बोदरसुकं ततोऽनु जगतीसुकम् ॥ १ ॥
पदे पदे मे स्खलितं जरसा विप्लुतस्य यत् ।
तरसा तत्समाधातुं सज्जीभवत सज्जनाः ॥ २ ॥

पुरा किल पाणिनिर्व्याकरणदर्शनपरीप्सया क्वचिद् दाक्षिणात्ये जनपदे नटेशमाराधयन् तपश्चचारेति पुराण गुह्यं कथासरित्सागरतोऽवगम्यते। तत्र चोग्रेण तपसा प्रसीदन्नुग्रः पाणिनिं सनकादिसिद्धांश्चोद्दिधीर्षन् नवपञ्चवारं ढक्कां नादयामास । तदुक्तं नन्दिकेश्वरकृतकाशिकायाम्—

नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् ।
उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥ इति ।

चतुर्दशसूत्र्याश्चानुबन्धान् आसञ्जयामास शिवः प्रत्याहारद्वारा पाणिनेर्व्याकरणसूत्रनिर्माणे सौकर्येण प्रवृत्तिसिद्धये। शेषस्त्वक्षरसमाम्नायोऽनादिरनन्तश्च तथा च कातन्त्रपरिशिष्टे कात्यायनः—"ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यस्तमिममक्षरसमाम्नायमित्याचक्षते न भुक्त्वा न नक्तं प्रब्रूयाद् महान्

* वाराणसेयसंस्कृतविश्वविद्यालयस्य २७-१२-६७ दिनाङ्कतः समारब्धे दशम-दीक्षान्तमहोत्सवावसरे विश्वविद्यालयेनायोजितायां गङ्गानाथझा-प्रवचनमालायां वेदान्तविभागाध्यक्षचरैः श्रीमद्भिः पण्डितश्रीरघुनाथशर्ममहोदयैः प्रदत्तमिदं विशिष्टव्याख्यानम्— —सम्पादकः ।

ब्रह्मराशिः" इति। ब्रह्मणः प्रतिपादको वर्णराशिरिति तदर्थः। एवञ्च चतुर्दशसूत्र्याः पाणिनिकर्तृकत्वं वदन्तो न ग्राह्यवचनाः। महाभाष्येऽपि—"वृत्तिसमवायार्थश्च वर्णानामुपदेशः" इत्युक्तम्। पाणिनेः सौकर्येण प्रत्याहारद्वारा या व्याकरणशास्त्रे प्रवृत्तिस्तत्सिद्धये यो वर्णानां समवायः—क्रमेण संनिवेशस्तद्रूपार्थसिद्धये वर्णानामुपदेशः पाणिनिं प्रति शिवकृत इति चैतद्वाक्यार्थः कैयटादिदर्शनादवसीयते।

इदञ्च व्याकरणं सर्वशास्त्रपारिषदमिति सर्वदर्शनानामत्र समावेशः। तथा च "कोशाड्ढञ्" (४।३।४२) इति सूत्रं साङ्ख्यसम्मतं सत्कार्यवादमादाय प्रवृत्तम्। "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" (१।२।५८) इति जातिशक्तिवादम्। "सरूपाणामेकशेष एकविभक्तौ" (१।२।६४) इति व्यक्तिशक्तिवादम्। "पृषोदरादीनि यथोपदिष्टम्" (६।३।१०६) इति शब्दनित्यत्ववादम्। आगमादेशविकारविधायकसूत्राणि च शब्दकार्यत्ववादमित्यादिकं द्रष्टव्यम्।

सोऽयं व्याकरणागमो व्याडिना सङ्ग्रहग्रन्थे विस्तरेणोपनिबद्धः। कालक्रमेण च संक्षेपरुचिषु वैयाकरणेषु सत्सु सङ्ग्रहेऽस्तमुपागते श्रीमहर्षिः पतञ्जलिर्महाभाष्यव्याजेन सर्वाणि न्यायबीजानि तत्रैव निबबन्ध। शुष्कतर्कानुसारिभिर्बैजिसौभवहर्यक्षैरार्षे भाष्यग्रन्थे विप्लाविते सति पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः कस्मिंश्चित्काले ग्रन्थमात्रेण दाक्षिणात्येषु व्यवस्थितः। अध्ययनाध्यापनपरम्परा तु तत्रापि विच्छिन्नैवाभूत्। ततश्च लङ्कायां त्रिकूटपर्वते शिलासूल्लिखितं व्याकरणागमं कुतश्चिद् राक्षसाल्लब्ध्वा भाष्यबीजानुसारिभिश्चन्द्राचार्यादिभिर्बहुशाखत्वं पुनर्नीतः। तदनन्तरं तानेव न्यायप्रस्थानमार्गान् स्वं च दर्शनमभ्यस्य भर्तृहरिगुरुणा वसुरातेन पुनर्व्याकरणागमसङ्ग्रहः प्रणीतः। तस्य च प्रतिमूर्तिर्वाक्यपदीये विस्तृता समुपलभ्यते। इदं च सर्वं वाक्यपदीये श्रीभर्तृहरिणा स्वयं निर्दिष्टं द्वितीयकाण्डान्ते—

प्रायेण संक्षेपरुचीनल्पविद्यापरिग्रहान्।
संप्राप्य वैयाकरणान् सङ्ग्रहेऽस्तमुपागते॥
कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने॥
अलब्धगाधे गम्भीर्यादुत्ताने शब्दसौष्ठवात्।
तस्मिन्नकृतबुद्धीनां नैवावास्थितनिश्चयः॥
बैजि-सौभव-हर्यक्षैः शुष्कतर्कानुसारिभिः।
आर्षे विप्लाविते ग्रन्थे सङ्ग्रहप्रतिकञ्चुके॥

यः पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः ।
काले स दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः ॥
पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः ।
स नीतो बहुशाखत्वं चन्द्राचार्यादिभिः पुनः ।
न्यायप्रस्थानमार्गांस्तानभ्यस्य स्वं च दर्शनम् ॥
प्रणीतो गुरुणाऽस्माकमयमागमसङ्ग्रहः ॥ इति ।

वाक्यपदीयमपि साम्प्रतं संक्षेपरुचीनल्पविद्यापरिग्रहान् वैयाकरणान् संप्राप्यास्तंगतमिति महत् खेदस्थानम् । इदञ्चैवं परम्पराप्राप्तं व्याकरणदर्शनं त्रिस्रोतसः प्रवाह इव विश्वं पुनानं वाक्यपदीये त्रिभिः काण्डैस्त्रिधा विभक्तम् । तत्र प्रथमं ब्रह्मकाण्डम्, द्वितीयं वाक्यकाण्डम्, तृतीयं पदकाण्डमिति । तत्र प्रथमे ब्रह्मकाण्ड शब्दसामान्यं व्यङ्ग्यव्यञ्जकभेदेन लक्षणप्रमाणाभ्यां लोकशास्त्रे तर्कांश्च तदाश्रितान् समाश्रित्य विस्तरेण विशदीकृतम् । तत्र व्यङ्ग्यं स्फोटात्मकमनादिनिधनं शब्दतत्त्वमक्षरं ब्रह्मशब्दार्थोभयात्मकजगदाकारेण विवर्त्तत इत्युक्तं हरिणा—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ इति ।

( वा० प० १।१ )

अतात्त्विकोऽन्यथाभावो विवर्तः । यथा रज्जोः सर्पः, मरुमरीचीनाञ्चापः । शान्तरक्षितस्त्वस्याः कारिकाया अर्थं स्वोपज्ञकारिकयाऽऽह—

नाशोत्पादासमालीढं ब्रह्मशब्दमयं परम् ।
यत्तस्य परिणामोऽयं भावग्रामः प्रतीयते ॥ इति ।

एवञ्च 'विवर्तते' इत्यस्य परिणमत इत्यर्थं शान्तरक्षितोऽभिप्रैति, किन्तु सोऽर्थो न युक्तः, हरिव्याख्याविरोधात् । तदुक्तं सोपज्ञाभिधायां हरिटीकायाम्—"विवर्ततेऽर्थभावेन । एकस्य तत्त्वादप्रच्युतस्य भेदानुकारेणासत्यविभक्तान्यरूपोपग्राहिता विवर्तः, स्वप्नविषयप्रतिभासवत्" इति । यद्यपि—

शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः ।
छन्दोभ्य एव प्रथममेतद् विश्वं व्यवर्तत ॥

( वा० पा० १।१२० )

इति कारिकया सह प्रथमकारिकाया विरोध इव दृश्यते, तथाप्यापाततः प्रतीयमानोऽपि विरोधो वस्तुगत्या नास्ति, कारिकार्थे भ्रान्त्या प्रतीयमानत्वात्। अयं हि प्रमितः कारिकार्थः प्रदर्श्यते। तथाहि—अयं सर्वोऽपि वाच्य-वाचकभेदभिन्नः संसारः शब्दस्य सूक्ष्मस्य वाक्तत्त्वस्य परिणाम इत्याम्नायविदो वेदविदो विदुः, विदन्ति च, न तु वयं कल्पयामः। अतः प्रथमं सर्गादावेतद् विश्वं छन्दोभ्य एव। अत्र छन्दःपदेन सूक्ष्मं वाक्तत्त्वमुच्यते लक्षणया, नित्यत्वशब्दत्वरूपछन्दः-साधर्म्यात्। वेदस्यानित्यत्वपक्षे तु छन्दसो वेदरूपस्य मन्त्ररूपस्य वा सूक्ष्मवाक्तत्त्वकार्यत्वेन कार्य-कारणयोरभेदोपचाराद् वा। तच्च सूक्ष्मं वाक्तत्त्वं परमाणुरूपम्, नित्यमनेकञ्चेति मत्वा छन्दोभ्य इति बहुवचनम्। व्यवर्तत व्यजायत इत्यर्थः। एवञ्च स्फोटस्य विवर्तः, सूक्ष्मवाक्तत्त्वस्य च शब्दतन्मात्रारूपस्य परमाणुरूपस्य वा परिणामो विश्वमिदमिति न हरिकारिकयोः पूर्वनिर्दिष्टयोः परस्परं विरोधः।

तदेतत् स्फोटात्मकं ब्रह्म स्वविवर्तस्य विश्वस्य दृश्यत्वादिभिर्लिङ्गैर्मिथ्यात्वाद् यद्यप्येकमेव श्रुतिषु गीतम्, तथापि स्वतो भेदाभेदाभ्यां सत्त्वासत्त्वाभ्याञ्चानिर्वाच्याभिः स्वशक्तिभिर्भिन्नत्वेन प्रतीयते, आकाशमिवैकं स्वोपाधिभिर्घटादिभिः। अस्ति चैका कालाख्याऽपि ब्रह्मणः शक्तिः, या सर्वासां ब्रह्मशक्तीनां कार्यजनने साधारण्येन सहकारिणी। तां खलु कालशक्तिं सहकारिणीमासाद्य सर्वा अपि ब्रह्मशक्तयस्तत्तत्कार्यानुकूला विश्वस्योत्पत्तिं प्रति प्रतिबन्धाभ्यनुज्ञानयोः शक्ताः। ताश्च शक्तीः समाश्रित्य सर्वोपादानं ब्रह्म सर्गादौ सृज्यमानप्राण्यदृष्टवशाद् भोक्तृ-भोक्तव्य-भोगरूपै-र्विवृत्य तिष्ठति, भोगोपरमे च प्रलीयमानं विश्वं ब्रह्मण्येव स्वविवर्तोपादानेऽप्येति। एवं वाक्य-पदीये प्राप्यस्य परस्य ब्रह्मणः शब्दतत्त्वस्य स्वरूपं प्रदर्शितम्। तत्प्राप्तिश्च परमः पुरुषार्थः।

तत्र दर्शनेषु ब्रह्मणः प्राप्तिर्दशधा विकल्पिता। तथाहि—अद्वितीयात्मसाक्षात्कारेण ममाहमित्यहंकारतादात्म्याध्यासरूपचिच्चिद्ग्रन्थिसमतिक्रममात्रं ब्रह्मणः प्राप्तिरित्यौपनिषदाः। प्रकृति-पुरुषान्यताख्यात्या प्रकृतेश्चरिताधिकारत्वात् तं प्रति निवृत्त्या तदुपयोग्यानां विकाराणां प्रकृतिभावापत्त्या भोगनिवृत्तिरूपोऽपवर्ग इति सांख्यपथानुगाः। वैकरण्यं नाम परिपक्वेन बाह्या-भ्यन्तरकरणानां यत्नपूर्वकनिरोधाभ्यासेन स्वभावतो विषयेभ्यो निवृत्तिरेव, तदेव ब्रह्मप्राप्तिरिति योगानुसारिणः। तथाहि—चक्षुरादिवृत्तिनिबन्धनो रूपादिग्रहः, ततश्च तत्प्राप्तये विविधाः समीहा अपि भवन्ति, ततस्ताभिः सुकृतदुष्कृतोपचयेन जात्यायुर्भोगरूपः संसारः। अतो बाह्यकरणानां चक्षुरादीनां पञ्चानां ज्ञानेन्द्रियाणाम्, कर्मेन्द्रियाणाञ्च पञ्चानां वाक्पाण्यादीनां बुद्धिमनसो-श्चाभ्यन्तरकरणयोर्निवृत्त्या संसारनिवृत्तिर्ब्रह्मप्राप्तिश्चेति युज्यते। अबहिःसाधनापरितृप्तिः, विषय-

लौल्याननुविद्धश्चेतस आनन्दानुभवावस्थाविशेष एव ब्रह्मप्राप्तिरित्यपि केचित्। संसारिणां बहिरनुकूलविषयसाधना या तृप्तिस्तद्व्यवच्छेदा या बहिःसाधनेत्युक्तम्। क्वचित्तु निरस्तसमस्तोपाधिपङ्कसंपर्कमद्वितीयं स्वप्रकाशमात्मतत्त्वमेव ब्रह्मप्राप्तिरित्युच्यते। यत उपनिषत्सु वर्ण्यते—"यथेष्टया स्त्रिया संपरिष्वक्तो न किञ्चन वेद" इति। क्वचित्तु—आत्मकामत्वमेव ब्रह्मप्राप्तिरिति। यतोऽनन्ताद्वितीये सच्चिदानन्दरूपे ब्रह्मणि साक्षात्कृते न शब्दादीन् विषयान् कामयते, तेष्वौत्सुक्यविगमात्। अनागन्तुकार्थत्वं ब्रह्मप्राप्तिरित्यपि केचित्। अपरिच्छिन्नात्मसुखाननुभवेन केवलमागन्तुकं वैषयिकं सुखमर्थयत इत्यागन्तुकार्थः पुरुषस्तस्य भावो नञा निषिध्यते। एतदुक्तं भवति—सर्वस्य भोक्तव्यस्य प्रकृतिपुरुषान्यताख्यातिरवधिरिति शब्दादेर्विषयजातस्य भुक्तत्वाद् न तदाऽऽत्मसुखातिरिक्तं सुखमर्थयत इति। केचित्तु परिपूर्णशक्तित्वं ब्रह्मप्राप्तिरिति। शक्तीनां परिपूर्णता चापरिच्छेदः साकल्यञ्चेत्युभयरूपम्। एषा च सगुणब्रह्मप्राप्तिर्हिरण्यगर्भभावापत्तिरूपा विराड्भावापत्तिरूपा वा। केचित्तु कालशक्तीनामात्ममात्रास्वसमावेशो ब्रह्मप्राप्तिरिति। कालव्यापाराणामात्मशक्तिष्वसंबन्ध इति तदर्थः। आत्मशक्तीनां कालव्यापारानियन्त्रितत्वमिति यावत्। माध्यमिकास्तु सर्वात्मना नैरात्म्यमेव ब्रह्मप्राप्तिरिति वदन्ति।

एवं दशसु विकल्पेषु या काऽपि ब्रह्मप्राप्तिर्भवतु, किन्तु तस्याः प्राप्त्युपायो वेदराशिः। यथाऽभ्युदयस्य दानतपोब्रह्मचर्यादिः। तदुक्तमभियुक्तैः—"वेदाभ्यासात् परमान्तरं शुक्लमजरं ज्योतिरस्मिन्नेवापारे तमसि वीते विवर्तते" इति। अत्र ज्योतिःपदेन स्वप्रकाशमात्मतत्त्वम्। अजरमिति शरीरधर्मनिरासः। शुक्लपदेन च कारणकार्यकरणरूपशरीरत्रयरूपोपाधिनिरासः, आन्तरं हृदयाद्यन्तरुपलभ्यमानत्वात्। अपारं तमश्चाज्ञानरूपं पापसङ्घातरूपञ्च। वीते—विगते सति अस्मिन्नेव जन्मनि, नान्यस्मिन् जन्मनि विवर्तते—प्रकाशत इत्यर्थः।

न केवलं ब्रह्मप्राप्त्युपाय एव वेदः, किन्तु साक्षात्कृतधर्मर्षिदृष्टमन्त्राणामनुकारोऽपि, अनुकरणमपि वेदः। स च वेद एकः। तथाहि—एकोऽयं वेदाख्य ऋषीणां मन्त्रद्रष्टामलौकिके दर्शने विषयत्वेन स्थितः स्फोटनामा पदार्थः। स च भेदरहितस्य भेदेन प्रतिपादयितुमशक्यत्वेनाभिव्यक्तिनिमित्ताद् ध्वनेर्लब्धक्रमे समारोपितप्रविभागे वागात्मरूपे महर्षिभिः प्रापितः। वस्तुभूतस्वीयैकत्वानतिक्रमेण—समारोपितेन संहितापदक्रमविभागेन विभक्तमार्गः, अध्येतॄणामध्ययननिमित्तां चरणसमाख्यां व्यवस्थापयद्भिर्महर्षिभिः समाम्नातः। अनेनैतदुक्तं भवति—यथा गौरित्येकपदपरिच्छेदिन्यामेकस्यां बुद्धौ पूर्वापरीभूतानेकवर्णाकारायामपि नानेकत्वं द्रष्टव्यं; एवं मन्त्रद्रष्टामृषीणां वेदराशिपरिच्छेदिन्यामेकस्यां बुद्धौ नानेकत्वं द्रष्टव्यमिति। छन्दोगादिरूपा

चरणसमाख्या च छन्दोऽध्ययनादिनिमित्ता भवति। तदित्थं नित्यातीन्द्रियसूक्ष्मसंहृतक्रमस्फोटात्मकवाग्रूपस्य वेदस्यैकत्वम्; अभिव्यक्तिनिमित्ताद् ध्वनेः क्रमलाभे संहितापदक्रमविभागेन चरणसमाख्यया च प्रविभक्तमार्गत्वेन नानात्वम्। तथा चैकत्वं वास्तवं ध्वन्यादिरूपाभिव्यक्तिनिमित्तेनारोपितञ्च नानात्वमित्यायातम्।

अन्यस्तु वेदस्यैकत्वं प्रविभागञ्चान्यथा प्रतिपादयति। तथाहि—यथा स्वरूपभेदे सत्येव देशभेदेनापि भिन्ना वाग् एकाभिधेयबोधे निबन्धनत्वमव्यतिक्रान्ता। स्वरूपतो भिन्ना वागेव च देशादिभेदप्रकल्पनव्यवस्थाहेतुः। वाग्भेदेनैव हि लोके देशो विभज्यते। प्रत्यक्षो हि पञ्चालानां वङ्गानाञ्च भाषाभेदः। एवमन्येषामपि तथा चरणभेदेऽप्येकार्थनिबन्धनत्वमव्यतिक्रान्तानि श्रुतिवाक्यानि।

यस्मात्तैरेव चरणैरेकं कर्म वागाख्यं कर्म राशिर्वैकः क्रियते। यद्वा ज्योतिरान्तरमेकमेव प्रतिपाद्यं सर्वासूपनिषत्सु, कर्माप्येकमेव प्रतिपाद्यं शाखाभिन्नेषु वेदेषु। एवञ्च वेदस्याभिधेयैक्येनैकत्वम्, स्वरूपभेदेन तत्प्रयुक्तचरणभेदेन च भेद इति।

अपरे तु वेदस्यैकत्वं प्रविभागञ्चान्यथैवोपपादयन्ति। तथाहि—यथा पुराऽष्टाङ्ग आयुर्वेद एक एवासीत्। आयुर्वेदस्याष्टावङ्गानि च—शल्यचिकित्सा, शालाक्यम् (मूत्रपुरीषादिनिरोधे शलाकाप्रयोगः), कायचिकित्सा, भूतचिकित्सा, कौमारभृत्यम् (प्रसूतिशास्त्रम्), अगदतन्त्रम् (नैरुज्योपायप्रयोग आहारनिद्रादिनिर्देशनरूपः), वाजीकरणतन्त्रम् (पुंस्त्वाभिवर्धनम्), रसायनतन्त्रम् (रसायनं तु तत् प्रोक्तं यज्जराव्याधिनाशनम्, यथा—अश्वगन्धाप्रयोगो रसायनमिति)। एवमष्टस्वङ्गेषु सत्स्वपि चिकित्सैकैवासीत्, आरोग्यमुद्दिश्य प्रवृत्तत्वात्। स एवायुर्वेदः साम्प्रतं कलौ नृणां शक्तिवैकल्यात् प्रविभक्ताङ्गो दृश्यते। एकेनैकेनैवाङ्गेन चिकित्सन्ते वैद्याः, अशक्त्या सर्वाङ्गापरिज्ञानात्। तथाऽयमप्यपरिमाणमार्गशक्तिभेदो वेदो मन्त्रराशिरिति। तथा चेदमवसितम्। बहूनां कर्ममार्गाणामुपासनामार्गाणाञ्च तत्तत्फलानुकूलशक्तिमतां तत्तच्छाखासु विहितानां शक्तिभेदा अस्मिन् वेदाख्ये ब्रह्मण्यभिधेयत्वेन विद्यन्ते। ते च सर्वेऽपि चरणभेदा मार्गभेदास्तच्छक्तिभेदाश्च पुरा कल्पे शक्तिसाकल्यादेकेनापि ज्ञेया अनुष्ठेयाश्चासन्। इदानीं तु कलौ नृणां शक्तिवैकल्यात् कश्चनैव चरणभेदो मार्गभेदः शक्तिभेदश्च ज्ञातुमनुष्ठातुं यथायथं शक्यत इति।

तथा चाङ्गी वेद एकः, अङ्गानि तु तस्यापरिमितानीति स्वरूपतो वेदस्यैकत्वम्; अङ्गकृतन्तु बहुत्वमिति। ब्रह्मणो विवर्तभूतस्य वेदस्य प्रथमं चत्वारो भेदाः—ऋग्यजुःसामा-

थर्वाख्याः। तत एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, पञ्चदश-धेत्येके, नवधाथर्वणो वेदः, इत्येवं प्रतिभागं बहवो मार्गाः; किन्तु तेषां सर्वेषामपि मार्गाणा-मेकत्र कर्मण्यङ्गता। यतः सर्वशाखाप्रत्ययमेकमेव कर्म, यतः सर्वाभिः शाखाभिरेकमेव कर्म प्रतीयते निष्पाद्यते च। तस्यां शाखायामनुक्तानामपि कर्माङ्गानां तदन्यशाखोद्दिष्टानां तत्र करणात्। व्यवस्थापितं चेदं पूर्वोत्तरमीमांसयोः। तद्यथा—सर्वभिषक्शाखाप्रत्ययमेकं चिकित्सितम्। सर्वेषां भिषजां शाखाभेदा अष्टावङ्गानि पूर्वोदितानि तन्निमित्तकमेकं चिकित्सितम्, अङ्गान्तरे विहितायाश्चिकित्साया अङ्गान्तरविहितचिकित्साहेतुकं फलमुद्दिश्य तुल्यतया तुल्यकालं वा भिषग्भिरनुष्ठानात्, एकस्यैवारोग्यस्य सर्वेषामङ्गानां फलत्वात्।

किञ्च प्रतिशाखं शब्दानां नियतकार्योत्पादकत्वेन नियतशक्तिकत्वञ्च दृश्यते। तथाहि—येन रूपेण येन स्वरेण च युक्तो यः शब्दो यदर्थबोधनाय यस्यां शाखायामुक्तः स तस्यामेव शाखायां तमर्थमभिधत्ते, न शाखान्तरे। अतोऽर्थाभिधानक्रियानियमेन शब्दस्य शाखासु शक्तिनियमः। येन स्वरेण च युक्त उक्तस्तत्स्वरयुक्त एव तच्छाखासाध्यकर्मफलाभ्युदयहेतुरित्य-भ्युदये शक्तिनियमः। तद्यथा—"देवसुम्नयोर्यजुषि काठके" इति। अनेन हि देवायन्त इति सुम्नायन्त इति च कृतात्वं यजुषि कठशाखायामेव स्वार्थे साधु। सिमस्याथर्वणेऽन्त उदात्त इत्येष स्वरनियमः। काठके यजुष्येवाथर्वण एव चाभ्युदयहेतुः।

इदन्त्ववधेयम्–वेदानां प्रविभागविषये दर्शनद्वयं वर्तते। तथाहि, केचिदेवं मन्यन्ते—अयं वेदो ब्रह्मणः सकाशाच्छाखादिभेदभिन्न एव विवर्तत इति। तेषां मत उपसंहृतक्रमभेदा वेदरूपा वाग् दुर्लभा। तथा च "एकोऽप्यनेकवर्त्मेव" इति ह्युक्तिविरोधः। 'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा" इति वेदवाच एकत्वोपवर्णनपराऽभियुक्तोक्तिरपि विरुध्येत। येषां तु दर्शनं ब्रह्मणः प्रथमतो वेद एकरूप एव विवर्तते, सोऽध्येतॄणामशक्तेर्महर्षिभिः प्रविभक्तः। स प्रलयकाले पुनरुपसंहृतभेदो भवति, पुनश्च सर्गादौ ब्रह्मण एकरूपेण विवृत्तस्य काल-क्रमेणाध्येतॄणामशक्तौ प्रविभाग इति; तेषां मत एव पञ्चमी षष्ठी च वाक्यपदीयकारिकासूपपादा भवतीति वेदवत् स्मृतीनामपि स्वार्थे प्रामाण्यम्, स्मृतीनां वेदमूलकत्वात्।

स्मृतयोऽपि बहुरूपाः सन्ति। तथाहि—काश्चिच्छब्दनिबन्धनाः (वेदमूलाः) मनुयाज्ञवल्क्यादिस्मृतयः। काश्चिच्चाशब्दनिबन्धना अनुपलभ्यमानश्रुतिमूलाः शिष्टसमा-चाररूपाः। प्रकारान्तरेणापि ता द्विविधाः—दृष्टप्रयोजना अदृष्टप्रयोजनाश्चेति। तत्र दृष्ट-प्रयोजनाश्चिकित्सास्मृतयश्चरकसुश्रुतादिप्रणीताः। औशनसादीनि नीतिशास्त्राण्यर्थशास्त्राणि।

अदृष्टप्रयोजनास्तु भक्ष्याभक्ष्य-गम्यागम्य-वाच्यावाच्यविषयाः। यथा "पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव" इत्यादयो भक्ष्यविधिविषयाः। "मांसभक्षयिताऽमुत्र" इत्यादिनिन्दार्थवादानुमेया निषेधविषयाः—"न मांसं भक्षयेत्" इत्यादयः।

वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः।
मांसानि च न खादेद् यस्तयोः पुण्यफलं समम्॥

इत्यादिरूपाश्च प्रत्यक्षाः। "साधारण्यः स्त्रियो गम्याः" इत्युर्वश्यर्जुनसंवादरूपविधिविषयाः, "ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा" इत्यादयः स्वदारेतरगमनप्रतिषेधविषयाः; "दोषा वाच्या गुरोरपि" इत्यादयो गुरुदोषवचनपराः, गुरोर्दोषा न वाच्याश्छात्रैरित्यर्थिकाश्च मन्वापस्तम्बादिप्रसिद्धाः। ता एतास्तुल्ये विषये प्रसक्तविरोधा आद्ययोर्द्वयोरुदाहरणयोर्दृष्टप्रयोजनाभावेन विकल्पिन्यः।

अन्ये तूदाहरणे दोषवचननिषेधस्य गुरोः प्रसादेन स्वाध्यायविघ्नप्रागभावपरिरक्षणरूपदृष्टफलस्य सत्त्वेन गुरुदोषवचनावचनयोर्न विकल्पः, किन्तु गुरुदोषवचनविरोधी प्रयत्न एव निषेधानुरोधेन कर्त्तव्यकोटौ परिशिष्यते। तथा चापस्तम्बधर्मसूत्रे—"गुरोर्दोषा न सदसि वदेत्, किन्तु रहसि गुरुं प्रत्येव वदेत्, यदि तथा कृतेऽपि न निवर्तेत न शृणुयाद्वा गुर्वन्तरं गच्छेत्" इत्याद्यर्थकं वाक्यम्। तुल्ये विषये विरोधप्रसक्तौ दृष्टप्रयोजनसत्त्वेऽपि यत्र शिष्टानां विप्रतिपत्तिः, तत्र दृष्टप्रयोजनानां स्मृतीनामप्रामाण्यम्। यथा "न सुरां पिबेत्" इति धर्मस्मृतिः। "औषधार्थे सुरां पिबेत्" इति चरकादिस्मृतिः। तत्र दृष्टप्रयोजनानां चरकादिस्मृतीनामप्रामाण्यम्। अतः प्राणत्राणार्थं सुरायामौषधरूपेण पीतायां कृच्छ्रचान्द्रायणादिकमशक्तौ तत्प्रत्याम्नायो वा प्रायश्चित्तं विधेयमिति व्यवस्था। सुरापानादिरूपायाश्चिकित्साया रोगनिवृत्तिर्दृष्टं प्रयोजनम्। "वैणवीं धारयेद् यष्टिम्" इत्यादिस्मृत्युक्तवाक्यविहितयष्टिधारणादीनामपि स्खलत्प्रतिष्ठानादिकमेव दृष्टं प्रयोजनम्। तथा च यद् दृष्टप्रयोजनप्रतिद्वन्द्विरूपेण विधीयते, तद् भक्ष्यादिकमदृष्टार्थमेव। यत्तु न तथा तद् दृष्टार्थमेव। यथा भैषज्यविषयसुरापानादिकम्।

एवं धर्मशास्त्रविरोधे औशनसादिनीतिशास्त्राणामर्थशास्त्राणाञ्चाप्रामाण्यम्। यत्र तु तुल्ये विषये विरोधप्रसक्तौ दृष्टप्रयोजनसत्त्वेऽपि न शिष्टानां विप्रतिपत्तिः, यथा मण्डूकवधे क्वचित् क्षीरभोजनं प्रायश्चितम्, क्वचित्त्वासक्तघृतं दधि प्रायश्चित्तं विहितम्। अत्र यद्यपि द्वयोरपि प्रायश्चित्तयोः प्राणत्राणरूपं दृष्टं प्रयोजनमस्ति, किन्त्वन्यतरस्मिन् शिष्टानां विप्रतिपत्त्यभावेन विकल्प एव। यद्यपि यजमानोऽतिथय आगताय महोक्षं वा महाजं वा पचेदिति स्मर्यते,

न चात्र कश्चन पचेः कर्तृविशेषः स्मर्यत इति कर्तृविशेषाकाङ्क्षाया अपरिसमाप्तेरप्रामाण्यमस्याः स्मृतेः प्राप्तम्, तथापि तत्र "राज्ञे वा ब्राह्मणाय वा महोक्षं वा महाजं वा पचेत् तदहमानुषं हविर्देवानामेवमस्मा एतदातिथ्यं करोति" इति शतपथब्राह्मणे श्रूयते। अत्र श्रुतौ 'महोक्षं वा महाजं वा पचेत्' इति प्रागुक्तस्मृतिदृष्टशब्दार्थसाम्यरूपं लिङ्गं श्रौतस्य स्मार्तस्य चैतत्कर्मणः कर्त्रैक्यं प्रवेदयते। अतः श्रौतैतत्कर्मवत् स्मार्तेऽप्येतस्मिन्ननिर्दिष्टकर्तृविशेषे कर्मणि वर्णत्रयमेव कर्तृ इत्यायातम्।

एवं येषां श्रुतिविहितैर्दृष्टादृष्टप्रयोजनैः कर्मभिरधिकारस्त्रैवर्णिकानां ते श्रुत्यैव श्रुत्याश्रिततत्तल्लिङ्गद्वारा स्मृतिविहितानामपि कर्मणां कर्तृत्वेनाख्यायन्ते। यासाञ्चाष्टकादिस्मृतीनां श्रुत्याश्रितं लिङ्गं नोपलभ्यते तासामपि श्रुत्याश्रितलिङ्गप्रवेदितकर्तृसामान्यानुज्ञातप्रामाण्यस्मृत्यन्तरसमभिव्याहारपाठात् स्थालीपुलाकन्यायेन श्रुत्यर्थाविरोधे सति प्रामाण्यकल्पना वेदविद्भिः कृता।

"औदुम्बरीं स्पृष्ट्वोद्गायेत्" इत्यादिश्रुत्यर्थविरोधे तु "औदुम्बरी सर्वा वेष्टयितव्या" इत्यादिस्मृतीनां न प्रामाण्यकल्पना। एवं सर्वासां स्मृतीनां वेदमूलकत्वेन प्रामाण्यं बोद्धव्यम्।

दर्शनभेदा अपि वेदादेव विनिर्गताः। तथाहि—अर्थवादान् अर्थवादसदृशानि च श्रुतिवाक्यानि मूलत्वेन प्रकल्प्य तदनुसारिणः पौरुषेयाः प्रवादाः प्रायेण दृश्यन्ते। अर्थार्थः प्रयोजनार्थो वादोऽर्थवादः। अर्थवादसादृश्यञ्च प्रयोजनाभावेऽपि आरोपितधर्मैरुपवर्णनम्। सर्वेऽपि प्रवादाः स्वस्वविकल्पसमुत्थाः, विकल्पानान्तु वेदवाक्यानि मूलानि, न च तेषां वेदवाक्यानां सोऽर्थः। ते तु प्रवक्तारः स्वस्वविकल्पानुसारेण तेषां वाक्यानां तत्तदर्थान् परिकल्प्य दर्शनभेदान् कल्पितवन्तः। तद्यथा—"असद्वा इदमग्र आसीत्" इत्यग्निचयनस्थानोपस्तुत्यर्थोऽर्थवादः। अस्यार्थः—इदमग्निचयनस्थानम्, अग्ने, चितेः प्राक्, असद्वै अशोभनमेवासीत्। ततो वै सदजायत इति। चितेरनन्तरमेव सत् शोभनमजायत इति। एतस्य त्वर्थवादस्यान्यथाऽर्थवत्तां कल्पयित्वाऽयं ब्रह्मण एकान्तत्वप्रवादो ब्रह्मणोऽसत्त्वनिरीहत्वानुपाख्यत्वादिधर्मनियमप्रवादः। तदुक्तम्—"असदसतो निरीहान्निरीहमपदादपदमनुपाख्येयादनुपाख्येयमवस्तुकादवस्तुकं जायते" इति। अत्र सर्वत्र प्रथमान्तपदेन कार्यं जगत्, पञ्चम्यन्तपदेन च तत्कारणं ब्रह्माभिप्रेतम्। कार्यस्य च कारणसधर्मता जगति दृष्टाऽत्रोच्यते। अत्र ब्रह्मणः सत्तानावेशनादसत इति। पद्यते प्राप्यते आश्रीयते गुणैरिति पदम्। गुणानाश्रयणादाह—अपदादिति। शब्दप्रवृत्तिनिमित्तधर्माभावादनुपाख्यादिति। वसति यस्मिन् कस्मिंश्चिदाधारे इति वस्तु।

२

ब्रह्मणोऽनाश्रितत्वादाह--अवस्तुकादिति । एतच्च सर्वमसत्त्वनिरीहत्वापदत्वादिकमद्वये ब्रह्मणि कल्पितमेव । यतः पूर्वत्वापरत्वरहिताभ्याम् ( युगपद्व्यवस्थिताभ्याम् ) सत्त्वासत्त्वाभ्यामेक आत्मा ब्रह्माख्यो विकल्प्य सदसद्रूपेण प्रतीयते । अतस्तदेव ब्रह्म असत्त्वरूपम् (सत्तानाविष्टरूपम् ) अनतिक्रामद्गगनादिरूपेण सद्व्यवहारनिबन्धनम् । यदि ब्रह्मणः सर्गावधिकपूर्वापरकोट्योरसत्त्वं मध्ये च सत्त्वं स्यात् तदा सत्त्वतः सद्व्यवहारः स्यात् । न त्वेवमस्ति, किन्तु सत्तानाविष्टस्य ब्रह्मणो युगपदेव सत्त्वासत्त्वे उक्तरीत्या विकल्प्येते । एवञ्चाद्वये ब्रह्मणि सोपाख्यत्ववन्निरुपाख्यत्वमपि नास्ति । निरुपाख्यत्वस्य प्रतियोगिसापेक्षत्वेन प्रतियोग्यभावेऽभावात् । एवञ्चासदसत इत्यादिकः पूर्वोक्तब्राह्मणमूलकः स्वविकल्पजः प्रवाद इति स्थितम् ।

एवं "नासदासीन्नो सदासीत्तम एव खल्विदमग्र आसीत्" इत्ययमपि चयनस्तुत्यर्थ एवार्थवादः । अस्यार्थः—इदमग्निचयनस्थानमुत्पत्तेः प्राग् असद् नासीत् । असतः सत्त्वापादनायोगात् । अस्तीति व्यपदेशानर्हत्वेन सदपि विद्यमानमपि नासीत्, किन्तु इदमग्रे स्वोत्पत्तेः प्राक् तम एवाज्ञातत्वेनाज्ञानमेवासीत् । इत्थं चयनस्थानस्य स्वोत्पत्तेः प्रागपि सत्त्वप्रतिपादनेनात्मवन्नित्यत्वप्रदर्शनेन स्तुतिः क्रियते । अस्य चार्थवादस्यान्यथाऽर्थं परिकल्प्य 'इदं फेन" इत्यारभ्य 'तमजिह्वोऽभ्यपूजयत्' इत्यन्तः षष्ठितन्त्रग्रन्थः प्रवृत्तः ।

इदं फेनो न कश्चिद्वा बुद्बुदो वा न कश्चन ।
मायेयं बत दुष्पारा विपश्चिदिति पश्यति ॥
अन्धो मणिमविध्यत् तमनङ्गुलिरावयत् ।
तमग्रीवः प्रत्यमुञ्चत् तमजिह्वोऽभ्यपूजयत् ॥ इति ।

अस्यार्थः—इदं जगत् फेनो वा फेन इव, इवार्थे वा शब्दः । न कश्चित् प्रकृतेरतिरिक्तः पदार्थः । बुद्बुदो वा, बुद्बुद इव न कश्चन प्रकृतेरतिरिक्तः पदार्थः । यथा फेनबुद्बुदौ न जलादतिरिक्तौ, तथेदं जगदपि न प्रकृत्यतिरिक्तं वस्तुभूतम् । बतेति खेदे । इयं प्रकृत्यतिरिक्तकार्यदृष्टिर्भोगप्रदत्वेनापवर्गविरोधितया दुष्पारा दुरन्ता माया मिथ्यादृष्टिहेतुभूतेति विपश्चित् पश्यति । मायात्वोपपत्तिश्च दृश्यमानतयाऽस्ति परमार्थतो नास्तीति कृत्वा । अन्धस्य मणिव्यधनमिवानङ्गुलेस्तत्र सूत्रप्रवेशनमिवाग्रीवस्य तत्प्रतिमोकः ( धारणम् ) इवाजिह्वस्य तन्मणिधारयितृपुरुषस्तुतिरिवाविक्रियात् परमेश्वराज्जगत् सर्ग इति । किञ्चात्र मणिव्यधनं चक्षुष्मतश्चक्षुरादयश्चान्धादिषु असत्या इति दृष्टान्ते दृष्ट्वा अन्धत्वादिभिः सत्त्वरहितं व्यधनादिभिश्चासत्त्वरहितं प्रधानमिति सांख्यैः प्रतिपादितम् । एष च तुच्छत्वकल्पनाद्वयरूपः प्रवादः प्रागुक्तचयनस्तुत्यर्थार्थवादस्यान्यथाऽर्थकल्पनामूलकः ।

तथा—"आपो वा इदमग्र आसीत्" इति, दर्शपूर्णमासविषयोऽर्थवादः। अस्यार्थः—इदं पार्थिवं जगत् सृष्टेः प्राग् जलमेवासीत्। ततश्च समग्रस्यास्य पार्थिवस्य ब्रह्माण्डस्य जलोपादानकत्वोपवर्णनेन जलरूपपयोदधिप्रधानद्रव्यसाध्यदर्शपूर्णमासकर्मणां स्तुतिः क्रियते। एतस्माच्चार्थवादादन्यार्थकल्पनयाऽयं प्रवादः प्रसृत—

"प्रज्ञानरूपपाकश्चासंप्रख्यानरूपपाकश्चापां प्राणो रसः। स खल्वावर्ती चानावर्ती च" इति। अस्यार्थः—तासामपां पच्यमानानामेकोंऽशश्चैतन्यरूपेण प्रज्ञानरूपपाकः। योऽयमपरोंऽशः स पृथिव्यादिरूपेणासंप्रख्यानरूपोऽचैतन्यरूपः पाकोऽस्येत्यसंप्रख्यानरूपपाक इति। किञ्चापामेव पच्यमानानां प्राणो रसो बलिष्ठः सार इति। तदेव चिदचिदात्मकस्य प्राणिनो देहस्याप्यत्वमुक्तम्। स खलु प्राणो जीवनकाल आवर्ती शरीरान्तरावर्तनशीलो मृत्युकाले चानावर्तीति स्वभावद्वयं प्राणस्य दर्शितम्। वस्तुतस्तु तदेकरूपं ब्रह्मैव सर्वप्रबोधरूपं सर्वप्रभेदरूपतायां गवाद्याकारैः प्रत्यवभासते, न तु जलस्य प्रज्ञानरूपः परिपाकः सम्भवति, जडत्वात्। इममेवार्थवादमाश्रित्य द्वैतिनः खल्वप्याहुः—"नित्याश्चानित्याश्च मात्रायोनयः, या सुरूपि चारूपि च सूक्ष्मं च स्थूलं चेदं भुवनं विषक्तम्" इति। अस्यार्थः—मात्राणां विषयाणां योनयो नित्याः परमाणुरूपाः, अनित्या द्व्यणुकादिरूपाश्च भवन्ति, यासु रूपि तेजोजलभूमिरूपम्, अरूपि वायुरूपं वाय्वाकाशरूपं वा भुवनं विषक्तं विशेषेण स्थितमिति। तथा—

उभौ सखायौ सयुजौ सुपर्णौ समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति॥

इदमर्थवादसदृशं वाक्यम्, स्तुतिरूपप्रयोजनाभावात्। पाठभेदेऽपि ऋङ्मन्त्रानुसार्ययं श्लोकः। पिप्पलं स्वाद्वत्तीति अस्वादुनः पापफलस्याप्युपलक्षणम्।

अथापरे "विवृत्ताविवृत्तभेदेन बहुधानकं बहुप्रकारकं चैतन्यम्" इत्याहुः। धानाशब्दोऽत्र बीजपरः। बह्व्यो धानाः कार्याणां बीजभूताः शक्तयोऽत्र सन्तीति बहुधानकं चैतन्यम्। उदाहरणन्तु—तदेजति तन्नैजति। तत्र विवृत्तमेजति, अविवृत्तं नैजति, विवृत्तं दूरे अविवृत्तं स्वात्मभूतत्वादन्तिके, विवृत्तं सर्वस्यान्तः, उपादानत्वात्; अविवृत्तं बाह्यतः, असङ्गत्वात्। पूर्वोदाहरणे विवृत्तं बुद्धीन्द्रियशब्दाभ्यामुक्तम्, अविवृत्तं क्षेत्रज्ञान्तर्यामिशब्दाभ्याम्।

एवमेते दर्शनभेदरूपा विकल्पा अर्थवादार्थवादरूपाणि श्रुतिवाक्यानि समाश्रित्य प्रवृत्ता भिन्नरूपानुपातिनोऽसत्याश्च परस्परपराहतत्वात् सर्वविकल्पातीते एकस्मिन्नर्थे ब्रह्मणि सर्वशक्तियोगात् कल्पिताः सद्रूपब्रह्माभिन्नत्वात्तु सत्याः। सर्वदर्शनकल्पनाधिष्ठानं ब्रह्म तु स्वभावतः सत्यम्, सर्वोपाधिपरिच्छेदरूपाऽशुद्धिशून्यत्वाद् विशुद्धं ज्ञानस्वरूपं प्रणवरूपेणैकपदेनैवावगम्यते।

तथाहि श्रुतौ श्रूयते—'एतद्वै सत्यकामपरञ्चापरञ्च ब्रह्म यदयमोंकारः' इति। ब्रह्मस्वरूपभूतञ्च ज्ञानं सत्यम्, सर्ववादाविरोधित्वात्। तथाहि—अद्वैतिभिः पारमार्थिकं सत्त्वं ब्रह्मण एव स्वीक्रियते, व्यावहारिकसत्त्वं तु सर्ववादगोचराणां पदार्थानामिति; एवमद्वैतवादस्य सर्ववादाविरोधित्वम्। न केवलं दर्शनप्रवादा एव वेदाद् विनिर्गताः, किन्तु वेदस्य विधिमन्त्रार्थवादत्रय्यन्तादिरूपस्याङ्गेभ्यो ज्यौतिषादिभ्यः शकुनज्ञानादयः उपाङ्गेभ्यश्च स्मृतिपुराणादिभ्यः स्वप्नविपाकातीतानागतयोनिज्ञानादयो विद्याभेदा लोके प्रसिद्धाः प्रभवन्ति। तदेवं वेदस्य पूर्वकाण्डं स्वप्रतिपादितनिष्कामकर्मानुष्ठानेन चित्तशुद्धिद्वारा सम्यग् ज्ञानहेतुः। उत्तरकाण्डं तु साक्षादिति व्यवस्थितम्।

तस्य च वेदस्य साक्षादुपकारि मुखमिव प्रधानमङ्गं व्याकरणम्। उपकारश्चात्र वेदशब्दानां व्याकरणेन स्वरूप संस्कारः, प्रकृतिप्रत्ययविभागान्वाख्यानरूपः, न तूत्पत्तिरूपः। वेदस्यापौरुषेयत्वेन नित्यत्वात् प्रकृतिप्रत्ययविभागान्वाख्यानेन च वेदशब्दानां साधुत्वावसायरूप उपकारः। व्याकरणेनोह्यश्चाम्नायान्तरमित्यूहरूपोऽप्युपकारो वेदस्य व्याकरणेन। यथा प्रकृतौ सौर्ययागे "सूर्याय त्वा जुष्टं निर्वपामि" इति श्रूयते। विकृतावाग्नेययागे तु 'प्रकृतिवद् विकृतिः कर्त्तव्या' इत्यतिदेशबलाद् "अग्नये त्वा जुष्टं निर्वपामि" इत्यूहरूप उपकारो व्याकरणेन वेदस्येति।

किञ्च प्रकाशाप्रकाशयोरुभयोरपि ज्ञानज्ञेययोः प्रकाशकस्य शब्दाख्यस्य पुण्यज्योतिषो ज्ञानाय ऋजुर्मार्गो व्याकरणम्। तथाहि—दुरधिगमः खलु शब्दराशिः प्रतिपदं व्याकरणेन। तदुक्तं भाष्ये—'बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं शब्दपारायणं प्रोवाच। इन्द्रश्चाध्येता बृहस्पतिश्च प्रवक्ता दिव्यं वर्षसहस्रमध्ययनकालो नान्तं जगाम, किं पुनरद्यत्वे" इत्यादि। अतः पाणिनिना सामान्यविशेषवद् व्याकरणाख्यं लक्षणं कृतम्। तद्धि लक्षणप्रपञ्चाभ्यां कृत्स्नस्य शब्दब्रह्मणो लघुनोपायेन समधिगमनिमित्तम्। सामान्यविशेषवल्लक्षणप्रणयनञ्च उत्सर्गापवादविधिप्रतिषेधनिपातनातिदेशस्थान्यादेशलिङ्गनियमरूपैः सप्तभिः सामान्यविशेषप्रकारैः। उत्सर्गापवादरूप एकः सामान्यविशेषप्रकारः। यथा "ण्वुल्तृचौ" (३।१।१३३), 'कर्मण्यण्" (३।२।१) इति। विधिप्रतिषेधौ द्वितीयः। तद् यथा—"पद्यति०" (६।३।५३) इति विधिः। "अतदर्थे" (६।३।५३) इति प्रतिषेधः। विधिनिपातने तृतीयः। यथा-"एचोऽयवायावः" (६।१।७८) इत्याद्यादेशविधायकं सामान्यसूत्रम्। "क्षय्यजय्यौ शक्यार्थे" (६।१।८१) इति निपातनरूपो विशेषः। विध्यतिदेशौ चतुर्थः। यथा-"अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" (१।२।४५) इति सामान्यसूत्रम्, "अन्तादिवच्च" (६।१।८५) इत्यतिदेशरूपो विशेषः

'काण्डे' इत्यादावेकादेशविशिष्टे प्रातिपदिकत्वसंपादकः। स्थान्यादेशौ पञ्चमः, यथा-हन् इति स्थानी सामान्यरूपः, वध इत्यादेशो विशेषरूपः, नियतविषयकत्वात्। लिङ्गेऽपि सामान्यविशेषरूपः षष्ठः, यथा-"रात्राह्नाहाः पुंसि" (२।४।२९) इति सामान्यम्, 'अहोरात्रे च छन्दसि" इति विशेषः। विधिनियमौ सप्तमः। यथा-"पूर्वत्रासिद्धम्" (८।२।१) इति सामान्यरूपो विधिः. "न लोपः सुप्स्वरसंज्ञातुग्विधिषु कृति" (८।२।२) इति विशेषरूपो नियमः। तदेवं सामान्यविशेषवद् व्याकरणं लक्षणप्रपञ्चाभ्यां कृत्स्नस्य शब्दब्रह्मणो लघुनोपायेन समधिगमनिमित्तम्। यथा-"ध्रुवमपायेऽपादानम्" (१।४.२४) इति लक्षणम्। उत्तराणि त्वपादानसंज्ञाविधायकानि सूत्राण्यस्यैव प्रपञ्चः। सर्वत्राप्यन्ततो बौद्धापायसत्त्वात्।

एवं व्याकरणमन्वाख्यानेन शब्दानां ज्ञानोपायः। अन्वाख्यानं विनाऽपि पृषोदरादीनां व्याकरणमेव ज्ञानोपायः। तथाहि—येऽष्टाध्यायीं नाधीयते, प्रयुञ्जते च संस्कृतान् शब्दान्, ते शिष्टा इत्यनुमीयन्ते। अनुमानं चेदमष्टाध्यायीं द्वारीकृत्यैव। अनुमानाकारश्च-इमे, शिष्टाः, उपदेशमन्तरेण निरपभ्रंशे संस्कृते शब्दे ब्रह्मणि लब्धप्रतिष्ठत्वात्; ये नैवं ते नैवम्, यथा अशिष्टा इति। अत्र हेतुज्ञानं चाष्टाध्यायीतः। अनुमिते च तेषां शिष्टत्वे शिष्टप्रयोगत्वात् पृषोदरादिप्रकाराणामनन्वाख्यातानां शब्दानां साधुत्वप्रतिपत्तिः। अत्रानुमानाकारः-अनन्वाख्याताः पृषोदरादयः, साधवः, शिष्टप्रयुक्तत्वात्; अन्वाख्यातवद् इति। अत्र हेतुज्ञानन्तु "पृषोदरादीनि यथोपदिष्टम्" (६।३।१०९) इत्यादिशास्त्रतः। तदुक्तम्—

शब्दार्थसम्बन्धनिमित्ततत्त्वं वाच्याविशेषेऽपि च साध्वसाधून्।
साधुप्रयोगानुमितांश्च शिष्टान् न वेद यो व्याकरणं न वेद॥ इति।

अस्यार्थः—शब्दतदर्थतत्सम्बन्धतत्प्रवृत्तिनिमित्तानां तत्त्वमविपरीतं रूपं यो न वेद। वाच्याऽविशेषेऽपि च साध्वसाधून् यो न वेद। एकस्मिन्नेवार्थे एक एव शब्दः साध्वसाधुतां प्रतिपद्यते। यथा सास्नादिमति गोणीशब्दो जात्यादिनिमित्तेन प्रयुक्तोऽसाधुः। आवपनरूपस्वप्रवृत्तिनिमित्तसाधर्म्यात् तत्रैव प्रयुक्तः साधुः। अष्टाध्याय्या अध्ययनं विनैव यः साधुशब्दप्रयोगस्तेनानुमिता ये शिष्टास्तान् यो न वेद स व्याकरणं न वेद इति।

किञ्च लोकेऽर्थव्यवहारे निमित्तं विवक्षा, तत्र च हेतुः शब्दतत्त्वावबोधस्तत्र च हेतुर्व्याकरणमिति महान् लोकोपकारो व्याकरणादिति।

व्याकरणान्मोक्षप्राप्तिरित्यपि हेतुर्व्याकरणस्यारम्भणीयत्वेऽध्येयत्वे ज्ञेयत्वे च। तथाहि—ज्ञानात्मना स्थितस्य शब्दस्वरूपस्य स्वात्मना सहाभेदतत्त्वज्ञो व्याकरणेन वर्णानुपूर्व्यादिक्रम-

नैयङ्कवमित्येवाभ्युदयायेति। तत्रारभ्यमाणे शब्दानुशासने शब्दार्थतत्सम्बन्धतत्फलान्युपदिष्टानि, तेषु त्रयाणां शब्दमूलत्वात् प्रथमतः शब्दस्य स्वरूपमेव विशदीक्रियते।

शब्दो नाम ज्ञानात्मा गौरिति ज्ञानमित्यादिरूपेण ज्ञानादभेदेन व्यपदिश्यमानो ज्योतिः-शब्देनापि श्रुत्यादिषु निर्दिश्यमानः स्वच्छः प्रकाशरूपो विभुत्वाच्छरीराद् बहिरन्तश्च वर्तमानो भावः। तदुक्तं वाक्यपदीये—

सैषा संसारिणां संज्ञा बहिरन्तश्च वर्तते।
तन्मात्रामनतिक्रान्तं चैतन्यं सर्वजन्तुषु॥ इति।

( वा० प० १, का० १२६ )

तथा च वक्तुः प्रयत्नविशेषेण समुपजातकण्ठताल्वाद्यभिघातानुकूलव्यापारविशेषरूपयोच्चारणक्रियया संजातेन ध्वनिविशेषेण वायुमारुह्य बहिर्गच्छता बहिरभिव्यक्तं स्फोटाख्ये शब्दे बाह्योऽर्थः सन्निहितो दर्पणादिष्विव प्रतिबिम्बवत् प्रतिसंक्रान्ताकारो भवति। स चार्थप्रतिबिम्बः शब्दे स्थिरो भवति, शब्दरूपस्योपाधेस्तद्ग्रहणस्वभावत्वात्। अत एव यत्रार्थोऽसन्निहितो भवति, तत्रापि शब्दोच्चारणेऽर्थस्तद्रूपतामापद्यमान इव लक्ष्यते। अत एव चार्थसन्निधाने शब्दार्थयोः सोऽयमिति तादात्म्यव्यपदेशः। स च प्रतिबिम्बकल्पोऽर्थो न वस्तुभूत इति तद्भावमिवापद्यत इति व्युत्पत्त्यवसरे इवशब्दोपादानम्।

तथा चेदमवधेयम्—ध्वनिशब्देषूच्चरत्सु द्वौ शब्दौ प्रतीयेते, यतस्तत्र शब्दस्वरूपस्य श्रावणप्रत्यक्षरूपेण कार्येण तदभिव्यञ्जकं ध्वनिविशेषरूपं कारणमनुमीयते। यत् तदानीं स्फोटाविभागेन श्रावणप्रत्यक्षगोचरीक्रियमाणं पृथङ् न प्रतीयते। तदुक्तं हरिणा—

स्फोटरूपाविभागेन ध्वनेर्ग्रहणमिष्यते॥ इति।

( वा० प० १, का० ८१ )

किञ्च, तत्रार्थप्रत्ययरूपेण कार्येण तत्कारणशब्दोऽनुमीयते, स्वरूपेण प्रत्यक्षोऽपीति रीत्या स्फोटात्मशब्दाभिव्यञ्जको ध्वनिविशेष एकः शब्दः, अर्थप्रत्यायकश्च स्फोटपदाभिधेयोऽपर इति द्वौ शब्दौ। तयोश्च स्वरूपभेदो वस्तुभूत इति केचिदाहुः। केचित्तु वस्तुगत्या तयोरभेदेऽपि प्रयोक्तृश्रोतृबुद्धिरूपोपाधिभेदात् तयोरौपाधिको भेद इत्याहुः। तथाहि—यद्यपि प्रयोक्तृबुद्धिस्थः शब्दः, तथापि स्वव्यञ्जकैर्वर्णैरुच्चारितैरभिव्यक्तो निमित्तं श्रोतृबुद्धिस्थस्य प्रत्यायकस्याभिव्यक्तौ, निमित्तप्रत्यायकयोः स्वस्वोपाधिबुद्धिभेदेन भेदेऽपि वस्तुतोऽभेदात्। शब्दस्य बुद्धिस्थत्वञ्चोक्तं हरिणा—

तद्वच्छब्दोऽपि बुद्धिस्थः श्रुतीनां कारणं पृथक् ॥ इति ।

( वा० प० १, का० ४६ )

तत्र शब्दस्य प्रत्यायकत्वं व्यञ्जकतया, तत्र वर्णानां संसर्गेण तद्गतप्रत्यायकत्वशक्तेरपि तत्र संसर्गात् । अर्थस्य च तत्र प्रतिसंक्रान्ताकारतया तद्गतप्रत्याय्यत्वशक्तेरपि तत्र संसर्गात् । यदि तु शब्दे प्रागुपवर्णितस्वरूपे स्वच्छेऽर्थस्य सन्निहितस्य तद्वाच्यस्यावाच्यस्य वा स्वरूपं न प्रतिसंक्रान्तं भवति, तदा कथं साम्प्रतं टेलीवीजनयन्त्रादौ शब्दे प्रवाहिते वक्तुः स्वरूपमन्यत्रोपलभ्यते, कथं च सर्वे सर्वपदादेशा इत्यस्माकं पुराणः सिद्धान्त उपपद्येतेति । कथं शब्दस्य बुद्धिस्थत्वं कथं वा निमित्तप्रत्यायकयोस्तयोः कार्यकारणभाव इत्याशङ्क्य समाहितं हरिणा—

वितर्कितः पुरा बुद्ध्या क्वचिदर्थे निवेशितः ।
करणेभ्यो विवृत्तेन ध्वनिना सोऽनुगृह्यते ॥ इति ।

( वा० प० १, का० ४७ )

अस्यार्थः—पुरा उच्चारणात् प्राग् बुद्ध्या वितर्कितो विशिष्टेन विलक्षणेन अन्यशब्दव्यावृत्तेन रूपेण निरूपितः क्वचिदर्थे निवेशितः—सोऽयमिति व्यपदेशार्हरूपेण तादात्म्येन समारोपितः करणेभ्यो विवृत्तेन स्थानकरणजन्येन ध्वनिना शब्दोऽनुगृह्यतेऽभिव्यज्यते, इति ।

अयं भावः—इह शब्दार्थयो संबन्धव्युत्पादने क्रियमाणे यच्छब्दरूपमर्थे सोऽयमित्यभेदेन समारोपयितुमिष्यते, यस्मिंश्च शब्दरूपेऽर्थरूपं स्वरूपसमारोपणाख्येन व्यापारेण प्रतिसंक्रान्ताकारतया दर्पणे मुखप्रतिबिम्बवदनुप्रवेशं लभते, तच्छब्दरूपमुच्चारणात् प्रागन्यशब्दव्यावृत्तेन रूपेण यथाऽभिप्रायं बुद्ध्या सोऽयमित्यर्थतादात्म्येन निरूपणेनाभिधेयात्मनि कृतसंबन्धं क्रियमाणं शब्दरूपमपहायार्थरूपापत्त्येवार्थरूपोपग्राहिस्वरूपं बुद्धौ निवेशयति । एवमसौ शब्दो वितर्कितो बुद्ध्येत्युच्यते ;

"करणेभ्यो विवृत्तेन ध्वनिना सोऽनुगृह्यते" इत्यस्य त्वयं भावः—सन्ति परमाणुकल्पा ध्वनिभागाः, यैरिदं व्याप्तं समस्तं नभस्तलम्, तैश्च सूक्ष्मैर्ध्वनिभिः करणव्यापारेण प्रचीयमानैः, परमाणुभिरिव स्थूलं भौतिकम्, स्थूलो ध्वनिर्जन्यतेऽभ्रैरिव सूक्ष्मैरुपचीयमानैः स्थूलोऽभ्रसङ्घातः । तदुक्तं हरिणा—

स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः ।
अभ्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः ॥ इति ।

( वा० प० १, का० १११ )

तच्च नादात्मकं प्राप्तविवर्तं स्थूलं ध्वनिं विक्रियाधर्माणं स्वव्यञ्जकमुपाधिमनुविक्रियते, अविक्रियाधर्मकमपि शब्दतत्त्वम्। अत्यन्तमविवर्तमानमपि विवर्तमानमिवात्यन्तमनुपजायमानमप्युपजायमानमिव गृह्यत इति यावत्। एवं शब्दस्योच्चारणात् प्राग् बुद्ध्या निरूप्यमाणत्वाद् बुद्ध्यवच्छिन्नत्वाद् बुद्धिस्थत्वम्, न तु वस्तुतो बहिरन्तरवस्थितस्य व्यापकस्य शब्दतत्त्वस्य बुद्धिस्थत्वं संभवति। आकाशस्येव घटस्थत्वम्, व्यवहारस्तु तद्वत् संभवत्येव। किञ्चाद्वयस्यापि व्यञ्जकध्वनिधर्मोपगृहीतस्य बुद्धिरूपोपाधिभेदेन निमित्तप्रत्यायकरूपाभ्यां कार्यकारणभावोऽपि कथञ्चिदुपपद्यते।

किञ्च, यद्यपि स्फोटोऽक्रमोऽनवयवत्वान्नित्यत्वाच्च, तथापि तदभिव्यञ्जकध्वनिधर्मः क्रमस्तत्रावभासते। तथाहि—क्रमवता स्थानकरणव्यापारेण परमाणुकल्पानां ध्वनीनां प्रचये जायमाने तैः प्रचितैर्ध्वनिभिः कादिवर्णरूपैः पदरूपस्य महतो ध्वनेरवयवैरुपजन्यमानप्रचय एको नादः स्थूलो ध्वनिः पदरूपो जायते। तस्य पदरूपस्य ध्वनेर्भागाः कादिवर्णरूपा ध्वनयः। न च कादयो वर्णा न ध्वनिरूपा इति वाच्यम्; कत्वादीनां ध्वनिधर्मत्वस्याध्यासभामत्यां स्पष्टमुक्तत्वात्। एवं पदध्वनिभिरपि वाक्यध्वनिरुपजन्यते।

अयं तु विशेषः—पदध्वनिना व्यज्यमानः स्फोटः पदमिति व्यपदिश्यते, वाक्यध्वनिना व्यज्यमानस्तु वाक्यमिति, न तु वस्तुतः स्फोटे पदत्वं वाक्यत्वं वाऽस्ति। पदध्वनेरवयवभूताश्च वर्णध्वनयः पदस्फोटस्याभागस्यापि भागभूता इव लक्ष्यन्ते। तदिदमुक्तं हरिणा—

अक्रमः क्रमरूपेण भेदवानिव लक्ष्यते। इति। ( वा० प० १, का० ४८ )

तथा च योऽयमुत्पद्यते पदरूपस्य ध्वनेः कादिवर्णरूपो भागः स कटाहादिपदरूपस्य स्फोटस्य भागमिवाभिव्यक्तमभ्यनुजानाति। तदन्यभागानाञ्च टादीनामभिव्यक्तिं प्रतिबध्नातीवेत्यतः पदस्फोटः क्रमवानवभासतेऽभिव्यज्यते च क्रमेण। एवं वाक्यस्फोटेऽपि वर्णक्रमावभासः पदक्रमावभासश्चावधेयः। तदेवं वस्तुगत्यैकोऽपि स्फोटः स्वाभिव्यक्तिकाले परस्परव्यावृत्तैर्वर्णरूपैः पदध्वनेरवयवैः स्वावयवैरिव गृह्यमाणैरवयवभेदकृतावच्छेदवानिव प्रत्यवभासते।

वस्तुतस्तु तस्य स्फोटस्य क्रमयौगपद्ये नित्यत्वैकत्वाभ्यां विरोधान्न विद्येते। नहि नित्यस्यैकस्य स्फोटस्य क्रमयौगपद्ये संभवतः। यौगपद्यस्य क्रमाभावरूपतया क्रमाभावे तस्याप्यभावात्, अभावस्य प्रतियोगिसापेक्षत्वात्। एवञ्चासौ स्फोटः स्वधर्ममेकत्वमनतिक्रामन् स्वव्यञ्जकस्य स्वसंसर्गिणो नादस्य पदरूपस्य वाक्यरूपस्य वा क्रमभेदप्रयुक्तं भेदरूपमुपसंगृह्णाति।

स्वसंसर्गिनादधर्म एवायं क्रमभेद इत्थम्भूतः स्फोटेऽवभासते, न तु स्वधर्मः। येन कारणेनात्यन्तमभिन्नात्माऽपि स्फोटो भिन्नरूपावयवोऽवयवी नानादेशस्थिताधारो वैचित्र्येणोपलभ्यते। यथा नीलादिगुणयुक्तेषु विभिन्नरूपवस्तु तन्तुषु समवेतोऽवयवी पटोऽविचित्रोऽपि विचित्रतन्तुसमवायाद् विचित्र इव प्रतीयते, न तु तत्र पटे नीलादिरूपाण्युत्पद्यन्ते, विरोधात्। येषां तु मते चित्ररूपम्, तत्र नीलादिविलक्षणं समुत्पद्यते; तेषामपि मते तद्गुणान्तरं विचित्रम्, न तु तदाश्रयीभूतं द्रव्यमिति विचित्रगुणसंबन्धादेवाविचित्रमपि द्रव्यं विचित्रं प्रतीयत इति दृष्टान्तः संभवति। अथवा यथा प्रतिबिम्बं स्वयमक्रियमपि जलादिरूपोपाधिसंसर्गात् क्रियावदिव, तथाऽक्रमोऽपि स्फोटो ध्वनिरूपस्वव्यञ्जकोपाधिसंबन्धात् क्रमवानिति।

किञ्च, ज्ञानवच्छब्दोऽपि स्वप्रकाशत्वादर्थस्य स्वरूपस्य च प्रकाशकः। तथाहि—यथा 'घटमहं जानामि' इति ज्ञानान्तरेण घटज्ञाने परिच्छिद्यमाने स्पष्टपरिच्छेद्यता ज्ञानस्य, तथा रूपादिविषयपरिच्छेदिन्यपि ज्ञाने ज्ञानस्य परिच्छेद्यतेति। यदि त्वेवं न स्यात्, तर्हि यद्रूपादिविषयकं ज्ञानमतीतं ज्ञानन्तरेणानुपलब्धञ्च तस्य स्मृतिर्न स्यात्, स्वेनान्येन चाननुभूतत्वात्। अनुभूतविषया हि स्मृतिर्भवति। दृष्टा च तत्रापि स्मृतिः—घटमहमद्राक्षमिति। तस्मात् स्मर्यमाणत्वादनुभूयते रूपादिविषयपरिच्छेदिन्यपि ज्ञाने स्वस्वरूपमिति निश्चीयते। तथा ज्ञानवदेव शब्दोऽप्यर्थं विनाऽनिर्देश्यस्वरूपः, शब्दार्थयोः सोऽयमितीतरेतराध्यासस्यानादित्वात्। अत एवास्यार्थस्य वाचकः कः शब्द इति प्रश्ने गौरित्यर्थतादात्म्येनैव प्रतिनिर्देशः क्रियते। एवञ्च शब्दोऽप्यर्थस्य प्रकाशकतया प्रकाश्येऽर्थे शेषभावमापद्यमानोऽभिधेयपरतन्त्रस्तद्रूपोपग्राही प्रधानभूतमिव अर्थवत् प्राप्तप्राधान्यं स्वस्वरूपं प्रत्यवभासयति। तच्च शब्दात् प्रतीयमानं शब्दस्य स्वरूपं यद्यपि लोके व्याकरणे च सर्वत्रैव शब्दादुपस्थितं भवति, तथापि लोके तस्य कर्त्रादिकारकरूपेण भुज्यादिक्रियासंबन्धविरोधाद् भुज्यादिक्रियान्वयित्वेन तत्र तन्नाश्रीयते, किन्तु वाच्यत्वसंबन्धेनार्थे विशेषणं भवति, विशेष्ये विशेषणम्। तत्रापि च विशेषणमिति रीत्या, न तु विशिष्टस्यापि भुज्यादिक्रियाविशेषणत्वम्, असंभवात्।

व्याकरणे तु—अग्नेर्ढगित्यादावङ्गारादिरूपस्यार्थस्य ढगादिकार्यविरोधित्वादग्न्यादिशब्दादभिधेयरूपेणोपस्थितस्य शब्दस्वरूपस्य कार्यैर्ढगादिभिरविरुद्धो योग इति शब्दस्वरूपस्य विशेष्यत्वमर्थस्य च वाचकतासंबन्धेन तत्र विशेषणत्वमिति। यत्पूर्वमुक्तम्—क्रमवान् ध्वनिः स्फोटाभिव्यक्तौ निमित्तम्, अक्रमः शब्दः स्फोटात्मकः श्रोतृबुद्धिस्थः प्रतिपादक इति। एतद्वैपरीत्येन केचिदाहुः—अक्रमः शब्दो वक्तृबुद्धिस्थो निमित्तम्, क्रमवान्

श्रोतृबुद्धिस्थः प्रतिपादक इति। तत्र दृष्टान्तो मयूराण्डरसः। तथाहि—यथा मयूरादीनां दम्पतीनामङ्गसंभवो रसोऽण्डेषूत्पत्स्यमानाङ्गप्रत्यङ्गचन्द्रकादीनां रूपोपग्रहपूर्वकं तदुत्पादने विभिन्नविचित्रशक्तिमत्तामपरित्यजन् प्रलीयते, तथा प्रागुत्पन्नः शब्दोऽप्युत्पत्स्यमानशब्दरूपोपग्रहपूर्वकमेव श्रोतुर्बुद्धौ प्रलीयते। स त्वेवं श्रोतृबुद्धौ प्रविलीनः प्रत्यस्तमितसर्वविभागः शब्दो यदाऽन्तःकरणे संस्काररूपेण स्थिता शब्दाकारा बुद्धिवृत्तिर्विवक्षया प्रतिबोध्यते, तदा पदवाक्यरूपध्वनिधर्मान् स्वस्मिन् विवर्तरूपानुपगृह्य प्रत्येकं वर्णरूपावयवोद्ग्राहेण क्रमाख्यां शक्तिं परिगृह्णाति। यतस्तेऽवयवाः क्रमेणावभासमुपगच्छन्ति। तेषामवयवानां यः क्रमेणोदयप्रत्यस्तमयप्रत्यवभासः सैवास्य शब्दस्योत्पत्तिविनाशशब्दाभिधेया क्रिया, न त्वस्य घटादिवदुत्पत्तिविनाशावतारोपिताविति। तदेव प्रथमत उत्पन्नः क्रमवान्, ततः श्रोतृबुद्धौ प्रविलीनोऽक्रमः, पुनश्च विवक्षयाऽभिव्यक्तः क्रमवानिति दशात्रयं शब्दस्य। तत्र दृष्टान्तान्तरं दत्तं वाक्यपदीये मूर्तित्रितयरूपम्। तथाहि-चित्रकारश्चित्रं निर्मिमाणः पुरुषादिमूर्तिं बहिष्ठां पूर्वमवयवक्रमेणोपलभ्य पश्चादेकया धिया संकलनयाऽन्तःपरिच्छिद्यानन्तरमवयवक्रमेण पटकुड्यादिषु चित्रं निर्मातीति रीत्या पुरुषादिमूर्तेस्त्रिरूपता—क्रमेणोपलब्धिः, अक्रमेणोपलब्धिः, पुनः क्रमेणोपलब्धिरिति बुद्धेः क्रमत्रयमाश्रित्य। तथा व्यावहारिकोऽपि स्वाभिव्यञ्जकवर्णक्रमेण ग्राह्यः शब्दो बाह्यः, पश्चाद् बुद्धौ प्रतिसंहृतक्रम एकबुद्धिनिबन्धनो भूत्वा पुनरपि विवक्षासमुपजात प्रयत्नप्रयुक्तानां करणानां स्थानकरणाभिघातरूपया वृत्त्या समुत्थितस्य ध्वनिधर्मस्य क्रमस्य प्रतिपत्त्या पुनरपि व्यवहारमवतरति। पूर्वं शब्दस्य स्वरूपग्राहकत्वमपीत्युक्तम्। तत्रेयमाशङ्का—यदि शब्दस्य स्वरूपग्राहकत्वमपि, तदा लोकेऽर्थवत् शब्दतः प्रतीयमानं शब्दस्वरूपमपि कथं न संभवत्क्रियाङ्गत्वं लभते? यत्र तु न संभवस्तत्र मा लभतां नाम। तद् यथा—

जपोपवासनियमैस्तपसाऽनाशकेन च।
भवपारं परं गन्तुं रामः सद्भिरुपास्यताम्॥ इति।

अस्त्यत्र संभवो रामशब्दस्यापि ध्यानरूपोपासनकर्मतायाः। जपोपवासादिकं तु चित्तशुद्धिद्वारा ध्यान उपकारकम् न तु साक्षादिति न शब्दे जपादिजन्यप्रीत्यभाववति तदसभव इति चेन्न; लोकेऽर्थस्यैव प्रायेण प्राधान्यम्, तस्यैव प्रायेण विधेयक्रियाऽन्वयसंभवात्। शब्दस्य त्वर्थं उपलक्षणत्वं प्रायेण दृश्यत इति परार्थत्वाल्लोको न तस्य क्रियाङ्गतां प्रतिपद्यते; यत्रास्ति तत्संभवस्तत्रापि। यत्र तु गौरयमित्यादौ शब्दार्थयोस्तादात्म्यव्यपदेशो व्याकरणे च नार्थस्य कथमपि विधेयान्वयसंभवः, तत्र शब्दस्यैव शब्दादुपस्थितस्य विधेयान्वयः, न त्वर्थस्य। तस्य तु

शब्दविशेषणत्वमेव । यद्यपि घटादीनां विषयाणां ग्राह्यत्वशक्तिरेव, न तु ग्राहकत्वशक्तिः । यतो घटादयो ग्राह्यत्वेनैव व्यवस्थिताः । अत एव ते स्वग्रहणकाले स्वोपलब्धाविन्द्रियस्य सहकारिणं यं कञ्चिदपि स्वल्पमप्यनुग्रहलेशं तस्य कुर्वन्ति । यथाऽञ्जनं चक्षुषः । न वा स्वस्मिन्ननुग्रहमात्रां कुर्वन्ति । यथोदकसेकेन पृथिव्याः संस्काररूपोऽनुग्रहः सौरभतद्गन्धप्रतिफलकः । तत्र स्वात्मनि वृत्तिविरोधाद् विषयानुग्रहो न, नापीन्द्रिये विषयकृतोऽनुग्रहः, विषयकाले तदभाव, काले चेन्द्रिये विषयकृतविशेषादर्शनात् । अत एव प्रत्यक्षं प्रति विषयः कारणमिति कार्यकारणभावोऽपि निरस्तः । न चैवं विषयासत्त्वेऽपि प्रत्यक्षापत्तिः, विषयेन्द्रियसन्निकर्षस्यापि हेतुत्वाभ्युपगमात् । दृश्यते चेन्द्रिये विषयसन्निकर्षासन्निकर्षकाले विशेषस्तत्कृतः ।

न च विषयस्यापि ग्राह्यस्य ग्रहणक्रियाकर्मणः कारकत्वेन ग्राहकत्वमपि संभवतीति वाच्यम् । ग्रहणकर्मणोऽपि विषयस्य ग्राह्यतयैव कर्मकारकत्यम्, न तु ग्राहकत्वेन, लोकप्रतीत्यभावात् । नहि लोकः क्रियायाः कर्मत्वकृतमुत्पत्तिरूपमुपकारं प्रतिपद्यत इति । तथा च सर्वत्रैव कर्मणः क्रियाफलत्वेन प्रयोजकत्वरूपं कारकत्वम्, न तु क्रियाजनकत्वरूपमसंभवात् । नापि सत्कार्यवादं बौद्धार्थवादं वाऽऽदाय जनकत्वसंभवः, अन्वयव्यतिरेकाग्रहणादिति । तदेवं घटादिषु विषयेषु ग्राह्यत्वशक्तिरेव, न तु ग्राहकत्वशक्तिः । तथा ग्राहकत्वेनैव व्यवस्थितानि सर्वेन्द्रियाणि ग्राह्यत्वमप्रतिपद्यमानान्येव ग्राह्यस्य विषयस्य ग्रहणनिमित्तत्वाय कल्पन्त इति ग्राहकाण्येव । तथापि तेजोरूपं वस्तु ग्राह्यत्वेन ग्राहकत्वेनोभयथा व्यवस्थितमिति तमसो नीलरूपविरोधिना भास्वरशुक्लरूपेण रूपभेदेन युक्तं तमसो द्रव्यान्तरेभ्यश्च व्यावृत्तत्वेनावधार्यमाणस्वरूपं ग्राह्यमपि चक्षुषोऽनुग्राहकत्वेन रूपाद्युपलब्धौ कारणभावं प्रतिपद्यत इति ग्राहकमपीति ग्राह्यग्राहकत्वरूपे द्वे शक्ती तेजसः । तथा शब्दोऽपि भावान्तरविरोधिना शब्दान्तरविरोधिना चानुपूर्वीविशेषरूपेण स्वरूपभेदेन भावान्तरेभ्यः शब्दान्तरेभ्यश्च व्यावृत्तत्वेनावध्रियमाणस्वरूपभेदः । वस्तुतः सामान्यरूपोऽपि कत्व-गत्वादिवर्णानुपूर्व्यादिरूपध्वनिधर्मपरिग्रहेण परिगृहीतविशेषशब्दस्वरूपो ग्राह्योऽपि प्रत्याय्यमर्थं प्रकाशयतीति ग्राहकोऽपि भवतीति रीत्या शब्दस्यापि द्वे शक्ती—ग्राह्यत्वग्राहकत्वरूपे, तेजोवत् । अत एव स्वयमगृह्यमाणैः शब्दैः स्वार्थो न प्रकाश्यते, यतस्ते शब्दा अगृहीताः सन्निधानमात्रेणैव लोकेऽर्थस्य प्रकाशका न दृष्टा इत्यर्थप्रकाशनात् प्राग् गृहीता एव स्वार्थस्य प्रकाशका इति सिद्धम् । एतच्च शब्दतः शब्दस्वरूपग्रहणं न श्रावणप्रत्यक्षरूपम्, क्रमेणोपजातानां वर्णानामेव श्रावणप्रत्यक्षगोचरत्वात् । सर्ववर्णानुसंहाररूपमर्थशेषिभावापन्नशब्दस्वरूपग्रहणं तु वर्णरूपनादाभिव्यक्तेन शब्देनैव, न तु श्रोत्रेण, सर्ववर्णानां तदानीमभावात् ; प्रत्यक्षस्य च वर्तमानवस्तुविषयकत्वात् ।

नैयायिकास्तु पदप्रत्यक्षं चरमवर्णांशे लौकिकम्, अन्यसर्ववर्णांशे तु पूर्वानुभवजनितसंस्कारजस्मृतिसहकृतेन श्रोत्रेणालौकिकम्–इदं रजतमिति भ्रमस्थल इव ज्ञानलक्षणप्रत्यासत्तिजन्यमभ्युपगच्छन्ति । तत्त्वद्वैतिमतानुसारिभिर्वैयाकरणैर्ज्ञानलक्षणप्रत्यासत्तेः प्रत्याख्यानात् प्रत्युक्तं वेदितव्यमिति । गृहीतानामेव शब्दानामर्थप्रकाशकत्वादेव क्वचिच्छब्दस्वरूपापरिज्ञानेऽर्थापरिज्ञानात् किमाहेति पृच्छ्यते । इन्द्रियाणां तु चक्षुरादीनां शब्दवैपरीत्येन सत्तामात्रेणैवार्थप्रकाशनादर्थे प्रकाशनीये तेषां स्वरूपं प्राङ् न गृह्यते । यद्यप्येकस्यैव शब्दस्य ग्राह्यत्वग्राहकत्वरूपं शक्तिद्वयमविभागेन तत्र वर्तते, तथापि बुद्ध्या शब्दस्वरूपात् पृथक् कृतौ सन्तौ, भिन्नतया विज्ञातौ सन्तौ तौ शक्तिरूपौ धर्मावेकस्यैव शब्दस्य संम्बन्धिषु भेदनिमित्तककार्येषु संज्ञासंज्ञिसंबन्धादिव्यवहारेष्वविरोधेन हेतुत्वं गच्छतः । तद् यथा—अग्नेर्ढगिति सूत्रघटकोऽग्निशब्द उच्चारितः संज्ञा, प्रयोगस्थश्च स एव संज्ञीति हि स्थितिः । तत्र चैकस्यैवाग्निशब्दस्य ग्राह्यत्वं ग्राहकत्वञ्चेति बुद्धिप्रकल्पितशक्तिभेदप्रयुक्तशब्दस्वरूपभेदमाश्रित्यावकल्पते । तथाहि—लोक एक एवार्थो व्यपदेशिवद्भावस्य विषयः । यथा सुवर्णस्याङ्गुलीयकमिति शब्दस्य योऽर्थः स व्यपदेशिवद्भावस्य विषयः ।

वस्तुत एकस्यैव सुवर्णस्य पदद्वयेन निमित्तभेदाद् भेदप्रतीतेः । सुवर्णशब्दस्य हि जातिः प्रवृत्तिनिमित्तम्, अङ्गुलीयकशब्दस्य तु सन्निवेशविशेषो निमित्तमिति । तथा शब्देष्वपि बुद्ध्या ग्राह्यग्राहकत्वशक्त्यपोद्धारे कृते शक्तिभेदाच्च तदाश्रयशब्दस्वरूपभेदे बुद्ध्या प्रकल्पिते सति यथा लोके मुख्यार्थविषये संज्ञासंज्ञिसंबन्धो व्यपदिश्यते गोपिण्डस्य गौरिति संज्ञेति, तथैव शास्त्रे शब्दस्य स्वं रूपं संज्ञीति संज्ञासंज्ञिव्यपदेशरूपमेकस्मिन्नपि भेदकार्यं स्वं रूपं शब्दस्याशब्दसंज्ञेति शास्त्रेण विधीयते, तत्प्रयुक्तञ्च अग्नेर्ढगित्यादौ ढगादिकार्यं स्वरूपस्यैवेति ।

वस्तुतस्तु स्वं रूपमिति शास्त्रेण लोकसिद्धं शब्दस्वरूपे स्वग्राह्यत्वमनूद्यत इति यत्र क्वचित् "जनपदे लुप्" "तस्यापत्यम्" इत्यादौ शब्दस्यार्थं प्रति शेषत्वेन बोधने तात्पर्यम्, तत्रार्थस्यैव शब्दं प्रति शेषित्वेन प्रतीतिरितीदं सूत्रं भाष्ये प्रत्याख्यातम् ।

इदं त्ववधेयम्—इदं सूत्रं विधानं वाऽनुवादो वा भवतु, संज्ञासंज्ञिसंबन्धादिप्रयुक्तानि भेदकार्याणि तु अग्नेर्ढगित्यादिशास्त्रविहितानि स्वग्राह्यस्य शब्दस्वरूपस्यैव भवन्तीत्यत्र न काचिद् विप्रतिपत्तिः । प्रायेण च शास्त्रे शब्दस्वरूपस्यैवार्थशेषितया ग्राह्यत्वम्, कार्यसंबन्धश्चेति तु तथ्यमेवेति । किञ्चैकस्मिन् शब्दस्वरूपे संज्ञासंज्ञिसंबन्धो व्याकरणशास्त्रीयसंज्ञारूपशब्दातिरिक्तविषयकः, सूत्रेऽशब्दसंज्ञेति प्रतिषेधात् । अत एव स्वरूपप्रवृत्तिनिमित्तका

अपि वृद्ध्यादयः संज्ञाशब्दा आदैच्पदप्रत्यायितैराकारादिभिः संज्ञिभिः शब्दैः सह संबन्धं यान्ति, न तु स्वरूपेण साकम्। तथैवाग्नेर्ढगित्यादौ सूत्र उच्चार्यमाणोऽग्निशब्दः स्वरूपप्रवृत्तिनिमित्तकोऽग्निशब्दाभिधेयेन संज्ञिनाऽग्निशब्देन प्रयोगस्थेन संबन्धमनुभवति। अत एव प्रयोगस्थ एव ढगादिकार्यं लभत इति।

इदन्त्ववधेयम्—यथा शब्दाः स्वस्माद् विरूपाणामर्थानां संज्ञाः, तथा सर्वेषां शब्दानां सर्वशब्दसंज्ञात्वे प्राप्ते शब्दानां यदात्मीयं रूपं तदेव संज्ञा स्वस्य रूपस्येति स्वं रूपं शब्दस्याशब्दसंज्ञेति संज्ञाशास्त्रेण नियम्यते। इदञ्च संग्राहकं वाक्यम्। ततश्च प्रतिलक्ष्यं लक्षणोपप्लवेनेदं संज्ञासंज्ञिवाक्यं कल्प्यते। अग्निशब्दोऽग्निशब्दस्य, उदश्विच्छब्दः उदश्विच्छब्दस्य संज्ञेत्यादि। अस्मिंश्च वाक्ये द्वावग्निशब्दौ संज्ञासंज्ञिनौ भेदेनोपादीयेते। तत्र द्वौ शब्दौ श्रूयमाणौ प्रतिपादकौ। प्रथमान्तोऽग्निशब्दः संज्ञारूपस्याग्नेर्ढगिति सूत्रघटकस्याग्निशब्दस्य प्रतिपादकः। षष्ठ्यन्तोऽग्निशब्दः संज्ञिनोऽग्निशब्दस्य प्रयोगघटकस्येति। द्वावेव चात्र प्रतिपाद्यावग्निशब्दौ यावेताभ्यामत्रोपस्थाप्येते। यौ संज्ञासंज्ञिसंबन्धभाजौ शास्त्रेऽग्नेर्ढगित्यादौ। यौ चात्र विधेयं संज्ञासंज्ञिसंबन्धरूपं कार्यं प्राप्नुतः। तदेवं सर्वस्यैव शब्दस्योच्चार्यमाणस्यैष स्वभावो यत् स्वान्यस्य समानानुपूर्वीकशब्दान्तरप्रतिपादकत्वमिति।

इदं तु न विस्मर्तव्यम्, यो हि प्रत्याय्यः शब्दः सोऽर्थं प्रतिपाद्य प्रलीयमानः कर्णकुहरेण प्रतिपत्तृबुद्धौ निविशत इति। प्रत्यायकस्तु शब्दो जातः प्रत्याय्यं शब्दान्तरमभिव्यज्य प्रलीयमानः प्रयोक्तुस्ताल्वादिस्थानरूपे करणे यदभिघाताच्छब्दनिष्पत्तिस्तत्र प्रलीयत इति।

इदमप्यवधेयम्—सूत्रे उच्चार्यमाणः शब्दः कार्यं न भजते, तेन प्रत्याय्यस्तु भजते। तत्र हेतुः प्रत्यायकस्य प्रत्याय्यशेषत्वेन परतन्त्रत्वरूपमप्राधान्यम्, अर्थप्रत्यायनेन चरितशक्तिकत्वञ्च। प्रत्याय्यस्य च शेषित्वरूपं प्राधान्यमिति। तथा च सर्वस्यापि प्रत्याय्यस्य चक्षुरादिग्राह्यस्यार्थरूपस्य, श्रोत्रग्राह्यस्य शब्दरूपस्य च क्रियासाधनत्वं विज्ञायते, न प्रत्यायकस्य शब्दस्येति। अग्नेर्ढगित्यादौ वस्तुतोऽभिधानाभिधेययोरग्निशब्दयोरेकत्वेऽपि स्वाभिव्यञ्जकभिन्नध्वनिधर्मोपग्रहेण भिन्नतया प्रतीतिरिति सोऽयमिति व्यपदेशाभावेनाभिधानाभिधेयभावानुपपत्तिरित्यानुपूर्वीरूपं सामान्यधर्ममेकमाश्रित्य तयोरभेदव्यपदेशेनाभिधानाभिधेयभावोपपत्तिः क्रियते। किन्तु ध्वनीनामानुपूर्वीरूपो धर्मोऽपि क्रमाख्य उच्चारणभेदेन भिद्यत एवेति न सोऽप्यभिधानाभिधेययोः सामान्यधर्म इत्यविद्यमानेऽप्यानुपूर्वीरूपस्य धर्मस्य वास्तवेऽभेदे यावन्न कल्प्यतेऽभेदः, तावन्न पर्यवस्यति सोऽयमित्यभेदमूलकोऽभिधानाभिधेयभावः। आनुपूर्व्याश्चाभेदकल्पना सजातीयवर्णघटितत्वेन वर्णगतजात्येकत्वमादाय तदाश्रयवर्णैक्योप-

पादनेन, सजातीयबुद्धिविषयत्वेन बुद्धिगतजात्येकत्वमादाय वा संभवति। अत्र च दृष्टान्त उक्तो हरिणा प्रकृतार्थसाधकः--

सामान्यमाश्रितं यद् यदुपमानोपमेययोः।
तस्य तस्योपमानेषु धर्मोऽन्यो व्यतिरिच्यते॥ इति।

( वा० प्र०, का० ६३ )

अय भावः--इह हि लोक उपमानमुपमेयं तयोश्च साधारणो धर्म इति त्रितयमेतत् सिद्धम्। तत्र ब्राह्मणवदधीते क्षत्रिय इत्युपमेये क्षत्रिये श्रूयमाणमध्ययनरूपं सामान्यमुपमाने ब्राह्मणेऽपि प्रतीयते; किन्तु यदा ब्राह्मणाध्ययनेन तुल्यं क्षत्रियाध्ययनमित्युपमानोपमेययोरध्ययनयोः संबन्धित्वेनाध्येतारौ ब्राह्मणक्षत्रियावुपादीयेतेऽध्ययनयोः परस्परराद् व्यावृत्तये, न तूपमानोपमेयभावेन, तदाऽध्ययनयोराश्रयभेदेन भिन्नयोः सौष्ठवादयो धर्माः सामान्यधर्मरूपत्वेन प्रतीयन्ते। यदा तु ब्राह्मणाध्ययनसौष्ठवेन तुल्यं क्षत्रियाध्ययनसौष्ठवमित्युपमानोपमेययोः सौष्ठवयोः संबन्धित्वेनैव ब्राह्मणक्षत्रियाध्ययन उपादीयेते, नोपमानोपमेयभावेन, तदाऽध्ययनसंबन्धिनां सौष्ठवादीनामपि परिनिष्पत्त्यादयः सामान्यधर्मा इति। एवं परिनिष्पत्त्योरप्युपमानोपमेयभावे विवक्षितेऽन्यः कश्चित् सामान्यधर्मरूपो विशेषः कल्पयितव्य इति रीत्या नास्ति सामान्यधर्मभेदरूपस्य व्यतिरेकस्येयत्तया परम्परावद्धयवच्छेद इति रीत्या सर्वथा कल्पित एवोपमानोपमेयभावस्थले सामान्यधर्मस्याभेदः। तद्वदभिधानाभिधेययोः सामान्यधर्माऽभेदोऽपि कल्पित एवेति। यद्यपि अशब्दसंज्ञेति प्रतिषेधात् संज्ञाशब्दो व्याकरणे स्वरूपपदार्थको न भवतीति संज्ञाशब्दात् क्वचित् षष्ठी, क्वचित् प्रथमेति व्यवस्था नोपपद्यते, तथापि यदा वृद्ध्यादिसंज्ञाया आदैज्रूपेण संज्ञिनाऽभिसंबन्धो भवति, तदा वृद्ध्यादिः संज्ञाशब्द आदैज्रूपस्वसंज्ञिपदार्थको भवति, संज्ञिनाऽभिसबन्धात् प्राक् तु वृद्ध्यादिसंज्ञापदं स्वरूपपदार्थकं भवति। अत एव स्वरूपेणार्थवत्तामादाय प्रातिपदिकत्वेन वृद्धिरिति प्रथमा विभक्तिः। अन्यथाऽर्थवत्त्वाभावात् सा न स्यात्। आदैज्रूपेण संज्ञिनाऽभिसंबन्धे तु षष्ठ्या निमित्तत्वाय कल्पते। आदैचां वाचकं वृद्धिपदमिति। तदुक्तं हरिणा—

प्राक् संज्ञिनाऽभिसम्बन्धात् संज्ञारूपपदार्थिका।
षष्ठ्याश्च प्रथमायाश्च निमित्तत्वाय कल्पते॥ इति।

( वा० प्र०, का० ६६। )

केचित्तु "स्वं रूपं शब्दस्याशब्दसंज्ञा" ( १।१।६८ ) इति सूत्रं शब्दस्येत्यस्यावृत्त्याऽन्यथा व्याचक्षते। तथाहि—शब्दस्य स्वं रूपं शब्दस्य ( शब्दगताया जातेः ) संज्ञेति। द्वितीयं

शब्दस्येति पदं शब्दगतजातिपरम्। प्रथमं तु शब्दव्यक्तिपरमिति। शब्दस्य स्वं रूपं शब्दस्य संज्ञि–इति द्वितीयोऽर्थः। अत्र प्रथमं शब्दपद व्यक्तिपरम्, द्वितीयं तु जातिपरमिति। तत्र जातेः शब्दशक्यत्वपक्षे स्वाश्रयव्यक्तिद्वारैव जातिर्ढगादिकार्याणि प्राप्नोति, न साक्षादसंभवात्। एतच्च सर्वमुक्तं हरिणा पद्यद्वयेन—

स्वं रूपमिति कैश्चित्तु व्यक्तिः संज्ञोपदिश्यते।
जातेः कार्याणि संसृष्टा जातिस्तु प्रतिपद्यते॥
संज्ञिनीं व्यक्तिमिच्छन्ति सूत्रे ग्राह्यामथापरे।
जातिप्रत्यायिता व्यक्तिः प्रदेशेषूपतिष्ठते॥ इति।

(वा० प्र० का ६८,६९)

तत्र जातावपि द्वयी प्रतिपत्तिराचार्याणाम्, प्रतिपत्तिप्रकारभेदात्! तथाहि केचिदाचार्या आहुः-लोके प्रतिनियतस्वरूपभेदा गोपिण्डादिरूपा गवादिव्यक्तयः प्रत्यक्षतः समुपलभ्यन्ते। यथा जातयः स्वत एव जात्यन्तरेभ्यो व्यावृत्ताः, तथा गोव्यक्तयः कर्कादिव्यक्तिभ्यः प्रतिनियतभेदाः। तेन विनैव जातिं गोशब्दस्तासु, न कर्कादिव्यक्तिष्विति। न च वस्तुमात्रतया गवादिव्यक्तिः संप्रमुग्धाऽव्यावृत्ताकारेति न जात्युपरागमन्तरेण गवादिषु कर्कादिभेदोऽवसीयत इति जात्यैव प्रतिनियतभेदा गवादिव्यक्तय इति वाच्यम्। गोव्यक्तेर्गोत्वजातियोगं विनैव स्वत एव कर्कादिव्यावृत्ततया संवेद्यत्वाद् गोपदेन व्यपदेश्यत्वाच्च। नह्यसंवेद्यम्, अव्यपदेश्यम्, अविद्यमानं वा व्यक्तीनां स्वरूपम्, यतो या प्रत्यक्षतो व्यवहारे गौरुपलभ्यते व्यवह्रियते च, सा व्यक्तिरेव, नाकृतिः। नहि गोत्वजातियोगाद् गोव्यक्तिर्गौः, किन्तु स्वत एव। जातेरिव गोव्यक्तेरपि स्वरूपभेदस्य स्वत एव प्रतीतिसंभवात्। एवं नीलगुण एव नील इति प्रत्यक्षतः समुपलभ्यते व्यवह्रियते च। सा व्यक्तिरेव, नाकृतिः। न तु नीलगुणगतं नीलत्वाख्यं सामान्यं नीलमिति प्रत्यक्षेण गोचरीक्रियते व्यवह्रियते वा। नहि नीलो गुणो नीलत्वजातियोगान्नीलः, किन्तु स्वत एव। एतावताऽऽकृतिर्नास्त्येवेति न मन्तव्यम्। यतः प्रतिनियतभेदवत्सु स्वर्थेषु व्यक्तिरूपेषु सत्स्वसाक्षात्कृताकृतिसमवायानामपि तेषामर्थानां या 'स एवायम्' इत्यनुगतैकाकारबुद्ध्यनुवृत्तिर्भिन्नेष्वभिन्नप्रत्ययरूपा, तस्यामाकृतेरेव निमित्तत्वम्। न च यथा द्रव्यगुणयोर्द्रव्यशब्दगुणशब्दाध्यारोपणेनैव द्रव्यमिति, गुण इति प्रत्ययः, न तु द्रव्यत्वगुणत्वजातिसमवायेन, सुवर्णरजताद्यतिरिक्ते द्रव्यत्वजातिसत्त्वे मानाभावात्; एवं पृथक्त्वविभागादिष्वपि गुणत्वजातिसत्त्वे मानाभावः; अत एवाद्वैतिभिः पृथक्त्वविभागयोर्भेदेऽन्तर्भावः क्रियते; तथा गोव्यक्तिषु भिन्नास्वपि गौरित्यभिन्नप्रत्ययनिमित्तं गोशब्दाध्यारोप एव किं न स्यादिति वाच्यम्, वैषम्यात्।

तथाहि—यत्रैकशब्देनैवाभिन्नप्रत्ययाभिलापः क्रियते, तत्र शब्दाध्यारोपो द्रव्यं गुण इति। यत्र त्वभिन्नप्रत्ययः पर्यायैरप्यभिलप्यते—घटः, कलशः, कुम्भ इति, तत्र घटत्वजातिस्वीकार आवश्यकः, शब्दभेदादिति। एतद् बुद्ध्यनुवृत्तिनिमित्तत्वं चाकृतेः सत्त्वेऽनुमापकम्। तथाह्यय-मत्रानुमानप्रयोगः—प्रतिनियतस्वरूपभेदासु घटादिव्यक्तिषु 'घट एवायम्' इति समानरूपेणानु-वर्तमाना बुद्धिः सदृशविषयनिबन्धना, सदृशबुद्धित्वाद्; यन्नैवं तन्नैवम्, यथा घटपटादिविषया विसदृशबुद्धय इति। विषयाणां सादृश्यञ्चैकधर्मनिबन्धनम्, तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं हि सादृश्यं सादृश्यं वेत्यभ्युपगमात्। स चैको धर्मो नित्योऽनेकसमवेतश्च जातिपदेन व्यवह्रियते नैयायिकैरित्येवं जातेरनुमानम्। तथा चैषामाचार्याणां मते व्यक्तयः प्रत्यक्षाः, तत्र समवेता जातयस्त्वनुमेया इत्यायातम्। एतदेवाचार्यमतमालम्ब्य शब्दव्यक्तिः शब्दगताया जातेः संज्ञेति प्रथमः पक्षः प्रवृत्तः। अस्मिन् मते जातेरप्रत्यक्षत्वेन संज्ञात्वासंभवात्। नहि स्वरूपतोऽगृहीतायाः संज्ञात्वसंभवः, लौकिकीषु देवदत्तादिपदरूपासु संज्ञासु स्वरूपतो गृहीतानामेव संज्ञात्व-दर्शनादिति।

अन्ये त्वाचार्या मन्यन्ते—जातिं विना व्यक्तीनां स्वरूपमव्यपदेश्यम्, तस्य व्यपदेश्यत्वे तु तत्रापि जातियोगकल्पनावैयर्थ्यम्, अतो जातिरेव शब्देन व्यपदिश्यते। जातौ वाचकत्वेन संबद्धस्वरूपास्तु शब्दास्तत्तज्जातिरूपेणैव तत्तज्जातितादात्म्येन व्यक्तिमव्यपदेश्यस्वरूपामपि प्रत्या-ययन्ति। तादात्म्यञ्चात्र भेदाभेदौ समसत्ताकौ कल्पितो वाऽन्यतरः।

ननु यद्यव्यपदेश्यं स्वरूपं व्यक्तीनां ताश्च जातेर्व्यावृत्तस्वभावा एवेति कथं जाति-शक्तेभ्यः शब्देभ्यो जात्यभिधानपूर्वकं तासामभिधानमिति चेन्न; सर्वत्रैव हि निमित्तानिमित्त-वत्यर्थे निमित्तिस्वरूपः प्रत्यय उत्पद्यत इति दर्शनात्। तथाहि—निमित्तं द्विविधम्। कारकम्, ज्ञापकञ्चेति। तत्र मृदादिरूपे निमित्त उपादानकारणे सर्वत्रैव निमित्तान्निमित्तवत्यर्थे निमित्ति-स्वरूपः प्रत्यय उत्पद्यमानो दृश्यते। मृद् घटः, सुवर्णं कुण्डलमिति। एवं जातिगुणक्रियादिरूपे केवलजातिरूपे वा व्यक्तीनां ज्ञापकनिमित्तेऽपि निमित्तान्निमित्तवत्यर्थे निमित्तिस्वरूपः प्रत्यय उत्पद्यते। घटादिव्यक्तौ घटत्वादितादात्म्योल्लेखी घट इत्यादिरूपः, घटत्वादीनां घटादिव्यक्ति-ज्ञापकत्वं तु व्यक्त्यविनाभावाद् धूमादीनामिव वह्न्यादि वह्न्यादिज्ञापकत्वमिति। तानि च ज्ञापकनिमित्तानि द्वैविध्येन भिन्नानि। दृष्टाभिधानान्यदृष्टाभिधानानि चेति। तत्र दृष्ट-मभिधानं येषां निमित्तानां तानि दृष्टाभिधानानि गोत्वादीनि निमित्तानि। गोशब्दादयो हि तेषामभिधानानि, अदृष्टाभिधानानि तूत्पलगन्धादीनि। नह्युत्पलगन्धशब्द उत्पलगन्धरूपं

गन्धविशेषं तद्गतं जातिविशेषं वाऽऽह, शब्दद्वयेन समस्तेन संबन्धावच्छिन्नस्य संबन्धिनोऽभिधानात्। तानि च द्विविधान्यपि निमित्तान्यनुवृत्तौ शब्दप्रत्ययावेकदेशसारूप्येणात्यन्तसारूप्येण च प्रवर्तयन्ति। तथाहि—देवतिर्यङ्मनुष्येषु प्राणीत्यनुवृत्तः शब्दप्रयोग एकदेशसारूप्येण प्रवर्तते, प्राण्येकदेशस्य वाक्कायव्यापारमात्रस्य दर्शनात् प्राणिशब्दस्य तत्र प्रवृत्तेः। अत्रापि गवादिशब्देष्विव दृष्टाभिधानमेव निमित्तं प्राणसंबन्धरूपं गोत्वादिजातिवत् तस्य सर्वत्रानुगतत्वात्। यद्यपि प्राणसंबन्धोऽपि प्रतिशरीरं भिन्न इत्यननुगतः, तथापि संयोगत्वजात्या तस्यानुगमः।

अत्यन्तसारूप्येण यथा—गोत्वजातिरूपं दृष्टाभिधानं निमित्तं गौरिति शब्दप्रत्ययौ भूयोऽवयवसन्निवेशतुल्यत्वेन प्रवर्तयति। उत्पलगन्धादीनि त्वदृष्टाभिधानानि निमित्तानि गन्धविशेषगतं जातिविशेषरूपमत्यन्तसारूप्यमाश्रित्यैवोत्पलगन्ध इत्यनुवृत्तौ शब्दप्रत्ययौ प्रवर्तयन्ति। तत्र दृष्टाभिधानेषु त्रयमनुवर्तते। जातिः, शब्दः, प्रत्यय इति। अदृष्टाभिधानेषु तु द्वयम्—शब्दो बुद्धिश्चेति। उत्पलगन्धादिषु जातेरनभिधानात् संबन्धावच्छिन्नस्य संबन्धिन एवाभिधानात्। तदेवमस्मिन् मते जातेरेव व्यपदेश्यत्वेन संज्ञात्वम्, स्वतोऽव्यपदेश्याया व्यक्तेस्तु संज्ञित्वमिति। तथा च प्रागुक्ताचार्यमतद्वयसत्त्वेन स्वं रूपमित्यत्र जातिरेव कैश्चित् संज्ञात्वेन प्रतिज्ञायते। शब्दस्येति तु शब्दशब्देन व्यक्तिरेव संज्ञित्वेन व्यपदिश्यते।

केषाञ्चित्तु विपर्ययेणायं व्यपदेशः। तथा च मतभेदेन जातेर्व्यक्तिः संज्ञा व्यक्तेर्वा जातिरित्यायातम्। सा चाग्निशब्दत्वादिरूपा जातिः प्रदेशेषु व्यक्त्यविनाभावेनोच्चारिता शब्दव्यक्तिं ढगादिकार्ययोगितया प्रत्याययति। सा च जातिर्यद्यपि व्यक्त्याऽसंसृष्टा नोच्चारिता भवति, व्यक्तिरपि जात्याऽसंसृष्टा प्रयोगविषयं नावतरति। तात्पर्येण तु विवक्षा भिद्यत इति प्रागुक्तो जातिव्यक्त्योः संज्ञासंज्ञिभावे पक्षभेद उपपद्यते। तथाहि—जातौ विवक्षितायां व्यक्तिर्नान्तरीयकत्वेनोच्चार्यते, जातिः प्रधानमिति। व्यक्तौ विवक्षितायां तु जातिर्नान्तरीयका व्यक्तिः प्रधानमिति रीत्या तात्पर्यभेदेन विवक्षाभेदः।

ननु सर्वत्र तत्तत्कार्यक्रियारूपः संस्कारो जातिविशिष्टायां व्यक्तावेव प्रागुक्तपक्षद्वयेऽपि, न तु केवलायां जातौ व्यक्तौ वा केवलायाम्। तथा च कथं प्रागुक्तपक्षद्वयसम्भव इति चेन्न, प्रतिज्ञाभेदमात्रेण पक्षभेदः, न तु वस्तुभेदेनेति स्थितेः। तथाहि—जातिः शास्त्रे कार्ययोगिनी संचिकीर्षिता, व्यक्तिः शास्त्रे कार्ययोगिनी संचिकीर्षितेत्येवं प्रतिज्ञाभेदमात्रम्, न वस्तुभेदः। तदेवं पक्षद्वयेऽपि जातिव्यक्तिभेदात् संज्ञासंज्ञिभेदो व्युत्पादितः।

अस्ति तु स्वरूपमित्यत्र बहुविकल्पो वैयाकरणानामधिकरणेषु संप्रदायः । तद् यथा—स्वं रूपं रूपमात्रं श्रुतिमात्रं य एकदेशोऽवयवोऽर्थवतो रूपार्थसमुदायस्यार्थविषयकसामान्यविशेषादिशक्तियुक्तस्य तत् स्वं रूपमिति सूत्रे शब्दस्येति पदेन शब्दत्वेनाश्रितस्य संज्ञेत्येकः पक्षः । अथवा रूपवान् सार्थकः समुदायोऽर्थविषयकसामान्यविशेषादिशक्तिभिः स्वसंसर्गिणीभिर्विशिष्टः श्रुतिमात्रस्य संज्ञेत्यपरः पक्षः । एतद्विपर्ययेण च रूपवान् समुदायः संज्ञा, रूपं तु श्रुतिमात्रं संज्ञीति । तदेवमत्र पक्षद्वयेऽपि समुदायैकदेशभेदात् संज्ञासंज्ञिभेद इति व्युत्पादितम् ।

अपर आह—स्वं रूपमित्यनेनाग्न्यादिश्रुतयः सत्यप्यग्निशब्दत्वादिजातियोगेऽग्न्यादिश्रुतिरूपतयैव प्रत्याय्यन्ते, नाग्निशब्दत्वादिजातियोगेन । शब्दस्येति शब्दशब्देन त्वग्निशब्दत्वादिजातियोगित्वमेवाख्यायते, नाग्न्यादिश्रुतियोगः । तत्र शब्दान्तरार्थस्य स्वसंज्ञिना सह प्रसिद्धभेदस्य स्व रूपमित्यत्र संज्ञात्वेनोपादीयमानस्याग्न्यादिश्रुतिरूपस्य शब्दान्तरार्थोऽग्निशब्दत्वजातियोगी संज्ञिभावं प्रतिपद्यत इति स्थितम् । तदेवमत्र पक्षे शब्दान्तरार्थोऽग्न्यादिश्रुतिरूपः संज्ञाशब्दान्तरार्थश्चाग्निशब्दत्वजातियोगी संज्ञीति स्वरूपकृत एव संज्ञासंज्ञिनोर्भेदव्यपदेशः । अर्थभेदेन च शब्दभेदमाश्रित्य शब्दान्तरार्थः शब्दान्तरार्थस्य चेत्युक्तम् । तदेतन्निदर्शनं स्वं रूपमिति सूत्रे स्थितानां पक्षभेदानाम् । अन्येऽपि पक्षा अत्र सूत्रे सन्ति ये विस्तरभिया नोदाह्रियन्त इति ।

येषामर्थभेदेऽपि एकशब्दत्ववादस्तेषां मत एक एव गोशब्दो न बहव इति जातिमन्तरेण स्वयमेकप्रत्ययप्रवृत्तेर्नात्र जातिपरिकल्पनेत्ययं समनन्तरोक्तो जातिव्यक्तिभेदव्यवहारप्रयुक्तः संज्ञासंज्ञिभेदव्यवहारो न संभवति, किन्तु शब्दनानात्ववाद एव । तथा च शब्दस्य कार्यत्वपक्षे नित्यत्वपक्षे वा केचिच्छब्दैकत्ववादिनः । तथाहि—पदरूपस्य गवादिशब्दस्य, वाक्यरूपस्य च वेदशब्दस्यात्मादिवन्नित्यत्वम्, न त्वस्मदादिवाक्यरूपस्य शब्दस्येति मीमांसकानां शब्दनित्यत्ववादः । गवादिशब्दस्य वियदादिवत् कल्पादौ समुत्पन्नस्य कल्पान्तकालपर्यन्तावस्थायिनो वियदादिवत् कार्यत्वमेवेति व्यवहारे मीमांसकमतमनुसरतां ब्रह्माद्वैतमभीप्सतामद्वैतिनां शब्दकार्यत्ववादः । तथा चैतेषामुभयेषामपि गवादिशब्दार्थभेदेऽपि प्रत्युच्चारणं प्रतिव्यक्ति चैक एव गोशब्द इति दर्शनम् ।

केचित्तु शब्दस्य कार्यत्वे नित्यतायां वा शब्दनानात्ववादिनः । तथाहि—भिन्नेष्वर्थेषु व्यक्तिरूपेषु प्रयुक्ता गवादयः शब्दा भिन्ना एव । ते नैयायिकमत इव कार्याः स्युः, मीमांसकमत इव नित्या वेति । इदमेव शब्दनानात्वदर्शनं मूलीकृत्य अर्थमर्थं प्रति प्रत्यर्थमिति व्युत्पत्त्या प्रत्यर्थं शब्दाभिनिवेश इति भाष्यसिद्धान्तः । तथा च शब्दनित्यत्ववादेऽपि शब्दनानात्ववाद

आवश्यकः, अर्थभेदेन शब्दभेदस्य घटपटादिशब्देषु भिन्नार्थेषु भिन्नरूपेषु च दर्शनादिति।

शब्दैकत्वदर्शनञ्चाश्रित्य "एकत्वादकारस्य सिद्धम्" इति ( म० भा० १।१ ) भाष्यं प्रवृत्तम्। ननु शब्दस्य वर्णरूपस्य पदरूपस्य वा कालेन शब्दान्तरेण वा व्यवधानं दृश्यत इति तेन व्यवधानेन शब्दस्य नानात्वमायाति। नह्येकस्य नित्यस्य विभोः शब्दस्य कालेन शब्दान्तरेण वा व्यवधानं संभवतीति चेन्न, तत्र कालशब्दाभ्यां शब्दोपलब्धेरेव व्यवधानम् न तु वर्णरूपस्य पदरूपस्य वा शब्दस्येत्यभ्युपगमादिति। यद्यपि शास्त्रेषु शब्दैकत्ववादः शब्दनानात्ववादश्चेति द्वयमप्यस्ति, तथापि शब्दैकत्ववाद एव भर्तृहरेरभिमतः। तदुक्तं तेन—

पदभेदेऽपि वर्णानामेकत्वं न निवर्तते।
वाक्येषु पदमेकञ्च भिन्नेष्वप्युपलभ्यते॥ इति।
( वा० प्र०, का० ७१ )

तदेवं वर्णानां पदानाञ्च पदेषु वाक्येषु चानुगतानामेकत्वे स्थिते यतो वर्णा एव पदम्, पदान्येव च वाक्यम्, ततो वाक्यस्य वाक्यान्तराद् भेदसत्त्वेऽपि वर्णपदाभ्यां न व्यतिरेकः। तथाहि—नहि वर्णरूपैरवयवैः शब्दान्तरस्य पदरूपस्यावयविन आरम्भः सम्भवति, ध्वनिरूपाणां वर्णानां स्थानकरणाभिघातात् पौर्वापर्यक्रमेण जायमानत्वात्, क्रमेण जायमानत्वेऽप्युच्चरितप्रध्वंसित्वेनायुगपत्कालत्वात्। यतो युगपदवस्थितानामेवायवानां द्रव्यान्तरारम्भकत्वं दृष्टमुपपद्यते च।

किञ्च, पदावयवत्वेन संभावितानां वर्णानामपि सावयवत्वात् तैः पदारम्भो न सम्भवति। तथाहि—वर्णानामप्यवयवा बुद्ध्या कल्पनारूपया पृथक् कर्तुं शक्यन्ते, करेण यन्त्रेण वा पृथक् क्रियासंभवाभावेऽपि। यथा 'आ–ऐ–औ–ॠ' इत्यादीनामवयवाः। एवं तदवयवानामपि बुद्ध्या प्रविवेचनम्। एवं तदवयवानामपि। सैषाऽवयवानां क्रमधारया बुद्ध्या पृथक् क्रियाप्रवृत्तिस्तावत्कालं यावदवयवानामपकर्षपर्यन्तः। किन्तु तत्रेदं नामैतदवयवस्य भाग इति व्यवहारस्य विच्छेदः। तच्च रूपं किमपि केनापि प्रकारेणाव्यपदेश्यं व्यवहारातीतमस्ति। अतः परम्परया तदारब्धानां वर्णानां कत्वखत्वादिना व्यपदेश्यानां न वस्तुसत्त्वम्, अवयवसंस्थानविशेषरूपस्यावयविनोऽवयवानतिरेकात्। तदेवं वर्णासत्त्वे तदारब्धस्य पदस्याप्यसत्त्वम्। वर्णपदाभावे च न ताभ्यां वाक्यस्य व्यतिरेकः। अतो वाक्यस्य पदानारब्धस्य नित्यत्वमखण्डत्वञ्च स्थितम्।

अन्येषां मते तु शब्दनानात्वदर्शनमधिकृत्य हरिणोक्तम्—

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन॥ इति॥
( वा० प्र०, का० ७३ )

इमे द्वे अप्येकत्वनानात्वदर्शने आश्रित्य व्याकरणशास्त्रे व्यवहारः क्रियते। शब्दविषयकेषु भिन्नेषु दर्शनेष्वेक एव पन्था लक्ष्यसिद्धय आस्थातुं न शक्य इति लक्ष्यसिद्ध्यनुकूलशास्त्रीयव्यवहारोपपत्तये सर्वाणि दर्शनान्याश्रिताः। तद् यथा—अर्थभेदेऽपि श्रुत्यभेदादेक एव हरिशब्दो नानार्थ इति केचिदाचार्या मन्वते। केचित्तु श्रुत्यभेदेऽप्यर्थभेदादनेक एव हरिशब्दा इत्याहुः। तदेवमभिन्नेऽपि स्फोटे तद्व्यञ्जकोपाधिभूता ध्वनयः कालभेदेनावर्तमाना भिद्यन्ते। तत्कृतश्चायं स्फोटस्याभिन्नकालस्यापि द्रुतादिवृत्तिभेदः। द्रुतादिवृत्तिषु च वर्णानां ध्वनिरूपाणां त्रिभागेणोत्कर्षो भवति। तथाहि—द्रुतायां यत्परिमाणा वर्णाः, ते त्रिभागेणोत्कृष्यन्ते मध्यमायाम्, ततोऽपि त्रिभागेणोत्कृष्यन्ते विलम्बितायाम्। तदेवं ध्वनिधर्मा अपि द्रुतादिवृत्तयो ग्रहणोपाधिभेदेन स्फोटस्य समाख्यायन्त इति। तत्र यथा शब्दो द्विविधः—स्फोटो ध्वनिश्चेति। तथा ध्वनिरपि द्विविधः—प्राकृतो वैकृतश्चेति। तत्र प्राकृतो नाम येन विनाऽनभिव्यक्तं स्फोटस्वरूपं न परिच्छिद्यते। शब्दाभिव्यक्तिकाले ध्वनिस्फोटयोर्नीरक्षीरन्यायेन पृथक्त्वेनानुपलम्भात् तं स्फोटं तस्य ध्वनेः प्रकृतिं स्वभावमिव मन्यन्ते। ततश्च प्रकृतौ स्फोटस्वभावे स्फोटस्वरूपे भवो वर्तमानः प्राकृतो ध्वनिरिति व्युत्पत्त्या प्राकृतपदस्य शब्दाभिव्यक्तिनिमित्ते ध्वनौ प्रयोगः। तदुत्तरकालभावी तु तस्य कालभेदेन स्थितिभेदहेतुर्ध्वनिः, तस्माद् विलक्षण एवोपलभ्यत इति तेन ध्वन्यात्मना विकारापत्तिरिव स्फोटस्य भवतीति वैकृत उच्यते। विकृत एव वैकृत इति प्रज्ञादित्वात् स्वार्थेऽण् प्रत्ययः। प्राकृतेन ध्वनिनाऽभिव्यक्तं स्फोटरूपं येन ध्वनिना प्रचितप्रचिततरं कालं पुनः पुनरविच्छेदेनोपलभ्यते स वैकृतः। यावदयं ध्वनिर्नोपरमति तावदुपलभ्यते स्फोट इति हि स्थितिः। प्राकृत-वैकृतध्वनिविषये एवं हि संग्रहकारः पठति—

शब्दस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते।
स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते॥ इति।

स चायं स्फोटः कदाचिदपि न प्राकृतध्वनिव्यतिरेकेणोपलब्ध इति प्राकृतध्वनिकालं ह्रस्वत्वादिभेदप्रयोजकं स्फोटेऽध्यारोप्य स्फोटस्यायं काल इति व्यवह्रियते शास्त्र इति ह्रस्वत्वादीनामारोपितानां शब्दभेदप्रयोजकत्वात् "अतो भिस ऐस्" (७।१।९) इति दीर्घप्लुतयोर्न प्रवर्तते। वैकृतो ध्वनिस्तु शब्दाभिव्यक्त्युत्तरकालभावी शब्दाद् व्यतिरेकेणोपलब्ध इति न तद्धर्मा द्रुतादिवृत्तयः शब्द उपचर्यन्ते। उपचारहेतोस्तादात्म्याध्यासस्याभावादिति द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कालभेदादिति वार्तिकस्योत्थानमिति।

किञ्चायं प्राकृतवैकृतध्वन्योर्विशेषः—यथा प्रदीपप्रकाशः स्वजन्मानन्तरमेव प्राक् सन्तमसावस्थितानां घटादीनां ग्रहणे हेतुः, अवतिष्ठमानस्तु स घटादीनां ग्रहणस्य योऽविच्छेद-लक्षणः प्रबन्धस्तद्धेतुर्भवति, न तु स्वोपलभ्यस्य घटादेः प्रचयमन्यद्वा धर्मान्तरं दर्शयति। एवं प्राकृतध्वनिभिः शब्देऽभिव्यक्ते सति तदुत्तरकालमनुवर्तमानो वैकृतो ध्वनिर्ग्रहणविषयस्य शब्दस्याभिव्यक्तौ स्थित्यनुकूलं बलमादधानः शब्दविषयकस्य ग्रहणस्यानुवृत्तिमविच्छेदलक्षणां संपादयति। किन्तु प्राकृतेन ध्वनिना स्फोटेऽभिव्यक्ते वैकृतध्वन्युपलब्धेः स्फोटोपलब्धिपश्चाद्-भावित्वाद् वैकृतध्वनेः स्फोटाद् भेद उपलक्ष्यते। अत एव स्फोटवैकृतध्वन्योर्भेदमुपलक्षयन्तो लोका वैकृतध्वनिगतं द्रुतादिवृत्तिभेदप्रयोजकं कालभेदं स्फोटेनाध्यारोपयन्ति। एवञ्च स्फोट-समुपलक्षितभेदवता वैकृतेन ध्वनिना स्वाभिव्यक्त्युत्तरकालं संसृज्यमानोऽपि स्फोटात्मा ताद्रूप्यस्यानध्यासात् प्राकृतध्वनिगतह्रस्वत्वादिविषयकशास्त्रीयव्यवहारमिव वैकृतध्वनिगत-कालभेदविषयकं व्यवहारं शास्त्रे न प्राप्नोतीति प्रागुक्तवार्तिकोत्थानमिति।

कथं ते प्राकृता ध्वनयः शब्दाभिव्यक्तिनिमित्तत्वं प्रतिपद्यन्त इति साम्प्रतं विमृश्यते। तत्र केचिन्मन्यन्ते—ध्वनिरुत्पद्यमानः श्रोत्रं संस्करोति। तत्र श्रोत्रस्य संस्कारो नाम ग्रहणासमर्थस्य श्रोत्रस्यापूर्वशक्त्याधानम्, विद्यमानाया वा-शब्दग्रहणशक्तेरनभिव्यक्तायाः प्रबोधनम्, शब्द-ग्रहणरूपार्थक्रियानुकूलं श्रोत्रे ध्वनिसान्निध्यमेव वा श्रोत्रस्य ध्वनिकृतः संस्कार इति त्रय इन्द्रियस्य संस्कारविकल्पाः। एवं संस्क्रियमाणं श्रोत्रं शब्दोपलब्धौ द्वारतां प्रतिपद्यते, तथा संस्कृतेन्द्रियो-त्पन्ना शब्दविषया बुद्धिश्च स्वविषयपरिच्छेदाय पर्याप्ता भवतीति।

अन्ये त्वभिव्यक्तिवादिनो मन्यन्ते—शब्द एव स्वाभिव्यञ्जकध्वनिसंसर्गात् प्राप्तसंस्कारः श्रोत्रस्य विषयत्वमुपगच्छति। एतन्मते ध्वनिकृता शब्दस्याभिव्यक्तिरेव संस्कारः। केषाञ्चिन्मते ध्वनिः शब्दश्रोत्रयोरुभयोरपि संस्कारद्वाराऽनुग्राहकः। एतन्मते ध्वनिकृतावुभयोः संस्कारौ प्रागुक्तावेवेति। साम्प्रतमभिव्यञ्जकध्वनिविषये दर्शनविकल्पा उद्देशतो विमृश्यन्ते। तत्र केचिद् जपाकुसुमलौहित्याविभागेन स्फटिकादीनामिव स्फोटरूपाविभागेन ध्वनेर्ग्रहणं वदन्ति। अन्यैस्तु ध्वनिश्चक्षुरादिवदसंवेद्योऽगृह्यमाणस्वरूप एव स्वविषयस्य शब्दस्य ग्रहे निमित्तमिष्यते। अन्यैस्तु स्फोटे न सहोपलभ्यमानोऽपि ध्वनिरुपलम्भभेदात् स्वतन्त्रः प्रकल्पितः। न तु स्फोटरूपा-विभागेन प्रतीयमानत्वात् स्फोटपरतन्त्रः। अत एव भग्नदन्ताद्युच्चारणे स्फोटानुपलम्भेऽपि ध्वन्युपम्भः। महति जनसमवाये च स्फोटरूपानवधारणेऽपि दूराद् ध्वनेरुपलम्भ इति।

ननु ध्वनेः शब्दाभिव्यञ्जकत्वं न संभवति। तथाहि—यद्येको ध्वनिस्तदभिव्यक्तिसमर्थः, तदा द्वितीयादिध्वन्युच्चारणानर्थक्यम्। अथान्त्यः, पूर्वेषामसामर्थ्येन वैयर्थ्यम्। अविशेषात् सर्वेषां

व्यञ्जकत्वे शब्दोपलब्ध्या वृत्तिप्रसङ्गः, न चैवमस्त्यनुभवः, समुदायस्य व्यञ्जकत्वे क्रमेणोच्चारितानां क्षणप्रध्वंसिनां ध्वनीनां समुदायाभाव इति चेन्न ; सर्वेषां व्यञ्जकत्वात् । न चैवं सत्येकेनैवाभिव्यक्तिनिर्वाहे इतरेषां वैयर्थ्यम्, शब्दोपलब्ध्या वृत्तिप्रसङ्गश्चेति वाच्यम् ; अभिव्यक्तौ तारतम्यसत्त्वेन सर्वेषां वर्णानामुच्चारणस्य सार्थक्यात् । तथाहि—प्रथमेन वर्णेनास्फुटा शब्दाभिव्यक्तिः, द्वितीयेन स्फुटा, तृतीयेन स्फुटतरा, चतुर्थेन स्फुटतमा इत्येवमभिव्यक्तितारतम्यात् ।

तत्र पदाघटितस्य केवलस्य पदस्य वर्णरूपैर्ध्वनिभिरभिव्यक्तिः, पदघटितस्य तु समासरूपस्य पदस्य पदरूपैर्महाध्वनिभिरवयवभूतवर्णध्वन्यारब्धैरिति विशेषः। पदरूपध्वनिसत्त्वे मानं तु हरिवाक्यम्—

अल्पे महति वा शब्दे स्फोटकालो न भिद्यते ।
परस्तु शब्दसन्तानः प्रचयापचयात्मकः ॥ इति ।

( वा० प्र० का० ११३ )

अभ्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः ॥ इति च ।

( वा० प्र० का० १११ )

केचित्तु न वर्णपदवाक्यरूपाः स्फोटाः, किन्तु तद्गता जातयः, तदाश्रयभूता व्यक्तयस्तु तदभिव्यञ्जिका इत्याहुः ।

ननु स्फोटो जातिरूपो व्यक्तिरूपो वाऽस्तु, तथापि तदभिव्यक्तिर्न संभवति, तस्य नित्यत्वात् । अनित्येष्वेव घटादिष्वालोकेनाभिव्यक्तिदर्शनादिति चेन्न ; नित्यानामपि घटत्वादिजातीनां स्वाश्रयव्यक्तिभिरनित्याभिरभिव्यक्तिदर्शनात् ।

अथापरोऽपि पूर्वपक्ष इहोपादाय समाहितो हरिणा प्रथमकाण्डे (९६) षण्णवतिकारिकाया व्याख्यायाम्—"देशभेदान्नाभिव्यज्यते शब्दः । समानदेशस्था हि घटादयः प्रदीपादिभिर्व्यज्यन्ते । करणसंयोगविभागाभ्यां तु व्यञ्जकाभ्यामन्यत्र शब्दोपलब्धिरिति । स चायं व्यञ्जकेषु ध्वनिष्वप्रसङ्गः । तत्रापि ब्रुवते—कथमेकदेशस्थः शब्दो नानादेशैरतिविप्रकृष्टैर्ध्वनिभिर्व्यज्यत इति । तत्रेदं प्रतिविधीयते—देशैकत्वं देशनानात्वमिति कायवताम् ( मूर्तिमताम् ) एष धर्मः । कायवन्तोऽपि तावदादित्यादयः परिच्छिन्नदेशनानाधिकरणस्था इहोपलभ्यन्ते । अमूर्तयोस्तु ध्वनिशब्दयोर्देशदेशिव्यवहारातिक्रमात् सत्यपि देशभेदविकल्पाभिमाने नैवासौ तयोर्भिद्यत इति" इति ।

अथापरः पूर्वपक्षः—घटादिष्वभिव्यङ्ग्येषु नास्त्यभिव्यञ्जकनियमः। मणिप्रदीपौषधिग्रहनक्षत्रैः सर्वैरभिव्यक्तिदर्शनादिति। अभिव्यञ्जकनियमान्नाभिव्यज्यते शब्द इति। प्रतिविधानं तु बाह्येष्वप्यभिव्यक्तिनियमो दृश्यते। यथा चक्षुःसमवेतं रूपमेव बाह्यरूपस्याभिव्यक्तौ निमित्तम्, न गुणान्तराणि, नापीतराणीन्द्रियाणि, नेन्द्रियान्तरगुणा इति। किञ्च घटादीनामभिव्यङ्ग्यानां नियताभिव्यञ्जकानपेक्षानियमोऽभिव्यङ्ग्यानां बाह्यविषयाणामभिव्यञ्जकानाञ्चेन्द्रियगतगुणानां वैजात्य एव। अत्र त्वभिव्यङ्ग्यानां शब्दानामभिव्यञ्जकानाञ्च ध्वनीनामस्ति शब्दत्वेन साजात्यमित्यभिव्यञ्जकनियमापेक्षा युक्तैवेति। यद्यप्यभिव्यङ्ग्येषु घटादिष्वभिव्यञ्जकप्रदीपादिधर्मानुविधानं न दृश्यते, दृश्यते त्वभिव्यङ्ग्ये शब्देऽभिव्यञ्जकध्वनिधर्मानुविधानमिति नाभिव्यज्यते शब्द इति पूर्वपक्षः संभवति, तथापि प्रतिविधीयते। दृष्टमभिव्यञ्जकधर्मानुविधानमभिव्यङ्ग्यानाम्। यथा खड्गे दीर्घम्, प्रियङ्गुतैले श्यामं मुखप्रतिबिम्बमिति।

इदञ्चात्र प्रसङ्गादवधेयम्—बिम्बोपादानकं बिम्बसमसत्ताकं तत्तदुपाधिनिमित्तकं तत्तदुपाधिपरिमाणानुरूपपरिमाणं बिम्बोपाध्योः सम्बद्धं प्रतिबिम्बनामकं किमपि वस्तु समुत्पद्यते। अत एव प्रतिबिम्बग्रहणेन बिम्बमपि गृहीतं भवति। यथा हनूमान् स्वच्छायाग्रहणेन निगृहीतोऽभूत्। अत एव प्रतिबिम्बे स्पर्शगुणोऽस्तीत्युक्तं धर्मशास्त्रेषु—

चाण्डालपतितां छायां स्पृष्ट्वा स्नानं समाचरेत्। इति।

अत एवेदानीं छायाग्राहि-(केमरा) यन्त्रेण प्रतिबिम्बं गृह्यते। बिम्बग्राहि-(टेलीवीजन) यन्त्रसाहाय्येन च ध्वनिसंक्रान्तं प्रतिबिम्बमन्यत्र गच्छतीति। कार्यः शब्द इति पक्षे ध्वनिस्फोटयोर्भेद उपदर्शितो हरिणा—

यः संयोगविभागाभ्यां करणैरुपजन्यते।
स स्फोटः शब्दजाः शब्दा ध्वनयोऽन्यैरुदाहृताः॥ इति।

(वा० प्र० का० १०२)

स्थानकरणसंयोगजो ध्वनिः स्फोटः, तज्जास्तु ध्वनयस्तत्प्रतिबिम्बोपग्राहिणस्तस्य द्रुतादिवृत्तिव्यवस्थाहेतव इत्यनित्यशब्दवादिमते प्रक्रिया। शब्दकार्यत्ववादे शब्दस्योपादानकारणानि दर्शनभेदेन बहुविधानि दर्शितानि हरिणा—

वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते।
कैश्चिद् दर्शनभेदो हि प्रवादेष्वनवस्थितः॥ इति।

(वा० प्र० का० १०७)

तत्र ज्ञानस्य शब्दत्वापत्तिरिष्यत इति मतं भाष्यकारस्य । "तथाहि—आख्यातोपयोगे ( १।४।२९ ) इति सूत्रे भगवान् भाष्यकार इदं सूत्रं नारब्धव्यमिति प्रतिपादयिष्यन्नाह–अयमपि योगः शक्योऽवक्तुम् । कथमुपाध्यायादधीत इति । अपक्रामति तस्मात्तदध्ययनम् । यद्यपक्रामति, किं नात्यन्तायापक्रामति, संततत्वात् । अथवा ज्योतिर्वज्ज्ञानानि भवन्ति ।"

अत्र कैयटः । "अथवेति । यथा ज्वालारूपं ज्योतिरविच्छेदेनोत्पद्यमानं सादृश्यात्तत्त्वेनाध्यवसीयमानं संततम्, तथैवोपाध्यायज्ञानानि भिन्नानि भिन्नशब्दरूपतामापद्यमानानि संततान्युच्यन्ते" इति । तत्र वायोस्तावच्छब्दभावापत्तिप्रक्रियोक्ता हरिणा—

लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना ।
स्थानेष्वभिहितो वायुः शब्दत्वं प्रतिपद्यते ॥
तस्य कारणसामर्थ्याद् वेगप्रचयधर्मिणः ।
सन्निपाताद् विभज्यन्ते सारवत्योऽपि मूर्तयः ॥ इति ।

( वा० प्र० का० १०८–१०९ )

अणूनां शब्दत्वापत्तिमपरे प्रतिपन्नास्तन्मतमप्युपदर्शितं हरिणा—

अणवः सर्वशक्तित्वाद् भेदसंसर्गवृत्तयः ।
छायातपतमःशब्दभावेन परिणामिनः ॥
स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः ।
अभ्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः ॥ इति ।

( वा० प्र० का० ११०–१११ )

ज्ञानस्य खल्वपि शब्दत्वापत्तिमपरे वर्णयन्ति तत्प्रक्रियाऽप्युक्ता हरिणा—

अथायमान्तरो ज्ञाता सूक्ष्मे वागात्मनि स्थितः ।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते ॥ इति ।

( वा० प्र० का० ११२ )

अयमर्थः—अस्ति पुरा शब्दतत्त्वमेवैकं पश्चाद् वाङ्मनसाख्यप्रविभागवत् । मनसस्तु वृत्त्याख्यः परिणामो ज्ञानम्, तदाश्रयत्वान्मनो ज्ञातृपदेनोच्यते । एवं ज्ञातर्यपि वाग्रूपत्वानुषङ्गः। तथा च सूक्ष्मे ध्वनिकृतकत्वखत्वादिपदत्ववाक्यत्वादिरूपभेदरूपोपसंग्रहादतीन्द्रिये वागात्मनि स्थितोऽतीन्द्रियवाक्सारूप्यानुषक्ते ज्ञानस्वरूपे स्थितः, आन्तरः शरीरान्तर्वर्तिहार्दाकाशे भवः समुपलभ्यमानो ज्ञाता स्वस्य रूपस्य व्यक्तये तस्यामवस्थायां शब्दरूपस्य ज्ञानादविवेकेन

(ज्ञानात्पृथक् शब्दरूपतयाऽनवधारणेन) शब्दरूपव्यक्त्यर्थं स्थूलेन्द्रियगम्येन रूपेणार्थविवक्षा-जनितप्रयत्नप्रेरितवायुव्यापारसमुपजाततत्तत्स्थानगतकरणाभिघातानन्तरं तेजसा शरीरान्तः-स्थितेनोष्मणैव साधनेन विवर्तते शब्दाकारेण परिणमतीति। एषा च ज्ञानस्य शब्दत्वापत्तिप्रक्रिया दर्शिता हरिणा—

स मनोभावमापद्य तेजसा पाकमागतः।
वायुमाविशति प्राणमथासौ समुदीर्यते॥
अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः।
तद्धर्मेण समाविष्टस्तेजसैव विवर्तते॥
विभजन् स्वात्मनो ग्रन्थीन् श्रुतिरूपैः पृथग्विधैः।
प्राणो वर्णानभिव्यज्य वर्णेष्वेवोपलीयते॥ इति।

(वा० प्र० का० ११३-११५)

इदं तु बोध्यम्—यथा वायुपरमाणवः सूक्ष्मा व्यजनाभिघातेन संहन्यन्ते, तथा शब्द-परमाणवः करणाभिघातात् संहन्यमानाः प्रचिता व्यक्ताश्च श्रोत्रेणोपलभ्यन्त इति। य एते शब्द-निष्पत्तिक्रमप्रतिपादनाय पूर्वं प्रक्रान्ताः पक्षभेदास्ततोऽन्योऽपि पक्षभेद उपदर्शितो हरिणा—

तस्य प्राणे च या शक्तिर्या च बुद्धौ व्यवस्थिता।
विवर्तमाना स्थानेषु सैषा भेदं प्रपद्यते॥ इति।

(वा० प्र० का० ११७)

अयमर्थः—तस्य वाचकस्य शब्दस्य या शक्तिर्बुद्धौ व्यवस्थिता, बुद्धावेव प्रथमं शब्दा-कारस्योपारोहात्। शक्तिरिति शब्दस्य सूक्ष्मं रूपमुच्यते। या च शब्दस्य शक्तिर्बुद्ध्या प्रेर्यमाणे बुद्धितादात्म्यापन्ने प्राणे व्यवस्थिता सैषोभयी अपि शक्तिस्तत्तत्स्थानेषु करणाभिघातेन तत्तद्वर्ण-रूपतया विवर्तमाना जायमाना भेदं वर्णभेदं प्रपद्यते प्राप्नोतीति। एवं शब्दविषयका दर्शन-विकल्पाः शिक्षाकाराणां मतभेदाश्चाख्याताः। अत्र च बहुवक्तव्यमपि विस्तरभयान्नोक्तम्। अन्ते च शब्दस्य माहात्म्यं परब्रह्माभेदेन हरिकारिकामुखेन प्रस्तुत्योपरम्यते—

शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धनी।
यन्नेत्रः प्रतिभात्माऽयं भेदरूपः प्रतीयते॥ इति।

(वा० प्र० का० ११८)

अयं भावः—वाच्यवाचकरूपस्यास्य विश्वस्य निबन्धनीजनिका शक्तिः, शब्देषु सूक्ष्मे वाक्तत्त्व एवाश्रिता। तथाहि–इदं सर्वं जगद् वाच्यवाचकोभयात्मकं प्रविनश्यत् शक्तिरूपेण स्वस्वग्राहकेन्द्रियेषु प्रविलयं गच्छति। तादृशशक्तिमच्चेन्द्रियजातं प्रविनश्यच्छक्तिरूपेण बुद्धिषु वृत्तिभेदभिन्नासु लयं याति, तादृश्यो बुद्धयश्च प्रविनश्यन्त्यः शक्तिरूपेण प्रतिसंहृतक्रमे सूक्ष्मे वाक्तत्त्वे प्रविलयं गच्छन्तीत्येवमस्य विश्वस्य सूक्ष्मे वाक्तत्त्व एव प्रविलयः। एतद्विलोमक्रमेण च सर्गकाले सूक्ष्माद् वाक्तत्त्वादेव बुद्ध्यादिपरम्परयोद्भवो विश्वस्येति। अन्ते च सतः सादरं प्रार्थये—

साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः।
अविच्छेदेन शिष्टानामिदं स्मृतिनिबन्धनम्॥

( वा० प्र० का० १४१ )

पठद्भिः पाठयद्भिश्च सतताभ्यासतत्परैः।
पालनीया प्रयत्नेन सदा भूसुरतज्ज्ञैः॥

———

# साहित्यसम्प्रदाये तात्पर्यस्वरूपम्

डा० रेवाप्रसादद्विवेदी

स० संस्कृतप्राध्यापकः, शासकीय-कलावाणिज्यमहाविद्यालयः, इन्दौरः, (म० प्र०)

तात्पर्यतत्त्वं साहित्यसंप्रदाये सर्वैरेव प्रतिपद्यते। दर्शनान्तरेष्विव साहित्यदर्शन-संप्रदायेष्वपि तत्त्वमिदं सर्वाचार्यसंप्रतिपत्तिसंवादमश्नुते। अधिकरण-विषय-स्वरूपाणि पुनरस्य विप्रतिपत्तिमेषां न त्यजन्ति। इत्थं सामान्यतः स्वीकृतस्यापि तात्पर्यस्य विशेषतः स्वीकरणे योऽयं मतिमतां मतिकलहस्तमेवात्र यथास्वमुपतिष्ठापयिष्यामः। तत्र साहित्यमिति काव्यस्यैवापरं नाम। काव्यं च शब्दार्थशरीरमुपगम्यते[1]। ततो द्वयं तत्र घटकं भवति शब्दश्चार्थश्च। तात्पर्यपदं पुनर्मतिमद्भिरेवं व्याक्रियते—"तदेव, परं साध्यं प्रतिपाद्यं प्रयोजनम् उद्देशो वा यस्य, स तत्परः, तस्य भावः तात्पर्यम्" इति (रुचिदत्तकृते न्यायकुसुमांजलिमकरन्दे ५।६)

ततश्च कदलीगर्भपत्रन्यायेनात्रानेके प्रश्ना उदयन्ते। तथाहि काव्यशरीरघटकयोरनयोः शब्दार्थयोर्मध्ये कतरस्तावत् तात्पर्यपदप्रकृतिभूततत्परशब्दनिष्ठबहुव्रीहिप्रतिपाद्यः पदार्थः, कतरश्च तत्परपद-घटकीभूत-पर-शब्दस्यार्थः। उभयं वा तदुभयतया ग्रहीतुं शक्येत? अत्रापि भावरूपमेतत् तात्पर्यं शब्दार्थयोरनयोः प्रत्येकपर्याप्त्या वा तिष्ठेत्, व्यासज्यवृत्त्या वा। उभयथापि भावस्यास्याधिकरणतावच्छेदकतां किं नु प्राप्नुयात्, शब्दगतयोः 'पदत्ववाक्यत्वयोः', अर्थगतयोः 'अभिधेयानभिधेयत्वयोः' चात्र समस्ततया व्यस्ततया वा धुरमेतामुद्वोढुमुत्कन्धरायितत्वात्। अत्रापि येयमनभिधेयार्थगत-यत्किञ्चिदुक्तधर्मनिष्ठाधिकरणतावच्छेदकता तस्या अप्यवच्छेदकं किम् लक्ष्यत्वं वा व्यंग्यत्वं वा, अनभिधेयस्य काव्यार्थस्यैतदुभयतयैव प्रतिष्ठापितत्वात्[2]। इयमत्र तात्पर्याधिकरणताया गाथा। तत्परशब्दावयवीभूतपरशब्दप्रतिपाद्यस्य तात्पर्यविषयस्यापि विषय एषैव स्थितिः। तत्र शब्दस्य साधनत्वात् "अर्थो हि प्रधानम्, तद्गुणः शब्दः" इति यास्कोक्तेश्चार्थस्यैव तात्पर्यविषयत्वं परिशिष्यते। तत्र—

"अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ[3] ॥ इति।

---

१. स्मरणीयं 'शब्दार्थशरीरं तावत् काव्यम्' इति ध्वनिकृद्वचो ध्वन्यालोकारम्भे।

२. साहित्यसंप्रदाये वाच्यलक्ष्यव्यङ्ग्येति त्रिविधस्यैव काव्यार्थस्य प्रथितत्वात्।

३. ध्वनिकारिका १।२ 'योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति' इति कारिकाया अस्याः परः पाठः।

स्याद् वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा ।
वाच्यादयस्तदर्थाः स्युः[१] ॥

इति चाभियुक्तोक्तेः काव्यार्थस्य वैविध्याद् विषयतावच्छेदकस्याप्यधिकरणतावच्छेदकस्येव विजिज्ञास्यत्वमेव प्रमुखे स्थितम् । ततश्च वाच्यत्वं वा तद् भवेत् लक्ष्यत्वं वा प्रतीयमानत्वं वा । अस्ति च स्वरूपविषयेऽप्यस्य कलहः शक्तिरूपं वा तद् भवेद्, वस्त्वन्तररूपं वेति । अत्र समाधिमनुसन्दधानः साहित्यशास्त्राचार्या एवमभिप्रतिष्ठन्ते ।

१. तात्पर्यस्याधिकरणम्

यद्यपि सहृदयानन्दवर्धन आनन्दवर्धनः[२], प्रज्ञानधनिको धनिकः[३], रसाभिषवलुप्तोऽभिनवगुप्तः[४], शृङ्गारप्रकाशसंसरदोजो भोजः[५], मधुकरीलम्पटो मम्मटः[६], भावप्रकाशनाविष्कृतस्वशारदाविनयः शारदातनयः[७], साहित्यविद्याधररुचको रुचकः[८] अन्ये चापि "यत् परः शब्दः स शब्दार्थः" इत्येवं शब्दमेव तात्पर्याधिकरणमुल्लिखन्ति, तथापि प्रतीयमानमर्थं प्रति [९]वाच्यस्योपसर्जनभावमुदीरयन्त इमेऽर्थस्यापि तदधिकरणतां न प्रत्याख्यान्ति । मम्मटादयश्च 'सर्वेषां प्रायशोऽर्थानां [१०]व्यञ्जकत्वम् ' इति ब्रुवाणाः पार्यन्तिकमर्थं प्रति प्राथमिकानां समेषामेवार्थानां तात्पर्याधिकरणतां प्रकाशयन्ति । इत्थं शब्दोऽर्थश्चेत्युभयमपि तात्पर्याधिकरणतामञ्चति । ततश्च शब्दत्वमर्थत्वं चेत्युभयमपि तात्पर्यनिरूपितामधिकरणतामवच्छिनत्ति । ये चेमे शब्दत्वव्याप्ये

---

१. काव्यप्रकाशे २।१ कारिका ।

२. व्यंग्यस्य प्राधान्येनाविवक्षायां वाच्यत्वं तावद् भवद्भिरभ्युपगन्तव्यम् अतत्परत्वाच्छब्दस्येति ध्व० चौ० सं० पृ० ४२२ ।

३. दशरूपकावलोकस्य ४।३६-३७ ।

४. चौखंबासंस्करणे ध्वन्यालोकलोचनपुस्तकस्य ४२२—पृष्ठतः प्रभृति ।

५. यत् परः शब्दः स शब्दार्थ इति तात्पर्यम्, तच्च वाच्यमेवेति मैसूरतः प्रकाशितस्य शृङ्गारप्रकाशस्य २४६ पृष्ठे ।

६. काव्यप्रकाशस्य पञ्चम उल्लासे ।

७. 'वाक्यार्थं प्रति शेषत्वं यत् स्यादुच्चारणस्य तु, तत् तात्पर्यम्' इति भावप्रकाशनबडौदा सं० पृ० १४७ ।

८. 'वर्त्तते यत् परः शब्दः स शब्दार्थ इति स्थितिः' इति साहित्यमीमांसायाः प्रथमे प्रकरणे । यद्यपि व्यक्तिविवेकहिन्दीभाष्यभूमिकायामस्माभिः साहित्यमीमांसाकर्त्रभिन्नकर्तृकं व्यक्तिविवेकव्याख्यानं मंखकृतमभ्युपेतम्, तथापि प्रसिद्ध्यनुरोधादत्र तदर्थं रुचक इत्येवाभिधानं प्रायोजि ।

९. ध्वनिकारिका १।१३, काव्यप्रकाशीयमुत्तमकाव्यलक्षणम्, रसगङ्गाधरीयमुत्तमोत्तमकाव्यलक्षणं वा ।

१०. काव्यप्रकाशकारिका २, उल्ला० २ ।

पदत्ववाक्यत्वे अर्थत्वव्याप्ये चाभिधेयत्वानभिधेयत्वे तेऽपि स्व-स्वाधिकरणगतां कुर्वद्रूपतामुपजीव्य तात्पर्याधिकरणतामवच्छेत्तुं सावकाशे। अस्ति च शिवयोरिव वागर्थयोः काव्ये साहचर्यनित्यता[१]। अस्ति च सा सर्वानुमोदिता। ततश्च तात्पर्यस्य प्रत्येकपर्याप्तिः, व्यासज्यवृत्तिश्चेत्युभयमपि शब्दोऽर्थश्चेत्युभयत्रैकैकशो यौगपद्येन च विद्यमानतया वेदितुं सुशकम्। यत्र यस्य कुर्वद्रूपता तत्र तस्य प्राधान्यमिति तदुत्तानभावदशा प्रत्येकपर्याप्तेरपि तत्रोचितत्वात्। ततश्च सापेक्षमेवैतत् कृत्स्नमवस्थितम्। अस्ति चैष ध्वनिकृतैवोन्मीलितः पन्थाः 'यत्रार्थः[२] शब्दोवा' इत्यादिरूपायां ध्वनिकारिकायाम् 'अर्थः शब्दो वा तमर्थं व्यङ्क्तः' इति प्राधान्यापेक्षया विकल्पार्थकं वापदं प्रयुज्य साहचर्यनित्यत्वापेक्षया तत्रैव व्यङ्क्तः' इति द्वित्वावच्छिन्नायां क्रियायां तयोरन्वयं दर्शयता अनुमोदितश्चायमभिनवगुप्तेन व्यवस्थामिमां समर्थयता[३]। एवं च विकल्पापेक्षया प्रत्येकपर्याप्तिः साहचर्यापेक्षया च व्यासज्यवृत्तिस्तात्पर्यस्य काव्यशब्दार्थद्वन्द्वेऽभिमन्येत। अभिमाने चास्मिन् प्रत्येकपर्याप्तिपक्ष उन्मिषन्ती 'इदमेकं तात्पर्यमिदं चैकम्' इति द्वित्वबुद्धिः सुषुप्तौ नाडी-पुरीततोर्मनोलुप्तिरिव[४] क्रमव्यवस्थामुपपाद्य व्यवस्थाप्येत, व्यवस्थाप्येत च नित्यसाहचर्यदशा व्यासज्यवृत्तितायामप्यदोषः[५]।

इत्थं शब्दोऽर्थश्चेत्युभययोर्मध्ये प्रत्येकमुभयं च यथास्वं स्वस्वव्याप्य-धर्मावच्छेदेन तात्पर्यतत्त्वस्याधिकरणभावमृच्छन्ति।

---

१. यदुच्यते काव्यप्रकाशे मम्मटेन—

तद्युक्तो व्यञ्जकः शब्दो यत्सोऽर्थान्तरयुक् तथा।
अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः॥ २ अन्तः।
शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः।
अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता॥ ३ अन्तः।

२. ध्वन्यालोककारिका १.१३।

३. ध्वन्यालोके १.१३ कारिकालोचने—"व्यङ्क्त इति द्विवचनेनेदमाह-यद्यप्यविवक्षितवाच्ये शब्द एव व्यञ्जकः, तथाप्यर्थस्य सहकारिता न त्रुट्यति। विवक्षितान्यपरवाच्ये च शब्दस्यापि सहकारित्वं भवत्येव। इति सर्वत्र शब्दार्थयोरुभयोरपि ध्वननं व्यापारः। अर्थः शब्दो वेति तु विकल्पाभिधानं प्राधान्याभिप्रायेण" इति।

४. यदुक्तमाचार्येण ३.२.७-ब्रह्मसूत्रभाष्ये शङ्करेण-"श्रुतिषु त्रीण्येव सुषुप्तिस्थानानि सङ्कीर्तितानि नाड्यः पुरीतत् ब्रह्म चेति। तत्र द्वारमात्रं नाड्यः पुरीतच्च, ब्रह्मैव त्वेकमनपायि सुषुप्तिस्थानम्" इति।

५. असाहचर्ये त्वेकमात्रस्य स्थितेरनेकमात्रवृत्तेर्व्यासज्यवृत्तिताया असंभवोऽत्र दोषः स्यात्। साहचर्ये स न संभवति।

२—तात्पर्य-विषयः

योऽयं 'तत्पर' शब्दावयवीभूतपरशब्दप्रतिपाद्यस्तात्पर्यस्य विषयः, तत्र 'यत्परः शब्दः स शब्दार्थः' इति न्यायमातिष्ठमानानामर्थसामान्यस्य तद्विषयतायां नास्त्येव विवादः। अर्थविशेषस्य तद्विषयत्वे पुनः सैव वैमत्यमयी स्थितिः साहित्यसंप्रदाये। तत्र—

(१) आनन्दवर्धनः (८५० खी०) प्राधान्येन प्रतिपिपादयिषितस्यार्थस्य तात्पर्यविषयतामूरीकुरुते[१] प्राधान्यं चानेकधा व्यवस्थापयति। तत्र द्वयं प्रधानम्—कविसंरम्भगोचरता, चमत्कारातिशयपात्रता च[२]। एतच्चोभयमपि ध्वनिसंप्रदाये ध्वन्यमान एवार्थे भवतीति तन्मते ध्वनेरेव तात्पर्यविषयत्वं प्रतितिष्ठति।

(२) तत्र केचित्—

अप्रतिष्ठमविश्रान्तं स्वार्थे यत्परतामिदम्।
वाक्यं विगाहते तत्र न्याय्या तत्परतास्य सा॥
यत्र तु स्वार्थविश्रान्तं प्रतिष्ठां तावदागतम्।
तत् प्रसर्पति तत्र स्यात् सर्वत्र ध्वनिना स्थितिः॥[3]

इति वदन्तो ध्वनितात्पर्ययोर्भिन्नतां सिषाधयिषन्ति।

(३) धनिकः [९९० खी०] तत्र प्रत्यवतिष्ठते। स हि प्रतिपाद्यगतामविश्रान्तिमिव प्रतिपादयितृजनगतां प्रतिपिपादयिषितार्थप्राप्त्यभावरूपामविश्रान्तिमपि तात्पर्यप्रयोजिकामातिष्ठते। आतिष्ठते च ध्वनितात्पर्ययोरभिदाम्। यदुच्यते तेन—

---

१. (१) 'रसभावादितात्पर्यमाश्रित्य विनिवेशनम्।
अलंकृतीनां सर्वासामलङ्कारत्वसाधनम्'॥
(ध्वनि सं० का० ध्व० पृ० १९७)

(२) प्रकारोऽयं गुणीभूतव्यंग्योऽपि ध्वनिरूपताम्।
धत्ते रसादितात्पर्यपर्यालोचनया पुनः॥
(ध्वन्या० ३।४० का०)

(३) रसादिषु विवक्षा तु स्यात् तात्पर्यवती यदा।
तदा नास्त्येव तत् काव्यम्……॥
(ध्वनि सं० का० ध्व० पृ० ४९७)

(४) यस्मिन् रसो वा भावो या तात्पर्येण प्रकाशते।
संवृत्त्याभिहितौ वस्तु यत्रालङ्कार एव वा॥
(३।४२–वृत्तिः)

२. 'चारुत्वोत्कर्षनिबन्धना हि वाच्यव्यंग्ययोः प्राधान्यविवक्षा' (ध्वन्या०–१।१३–वृत्तिः)

३. दशरूपकावलोकः–४।३७।

प्रतिपाद्यस्य विश्रान्तिरपेक्षापूरणाद् यदि ।
वक्तुर्विवक्षिताप्राप्तेरविश्रान्तिर्न वा कथम् ॥
पौरुषेयस्य वाक्यस्य विवक्षापरतन्त्रता ।
वक्त्रभिप्रेत-तात्पर्यमतः काव्यस्य युज्यते[१] ॥ इति ।

(४) भोजराजो-[१०५० खी०]ऽत्र मध्य थधर्ममातिष्ठते । स एतदुभयं समन्वयति । "अभिधाविवक्षातात्पर्यप्रविभागव्यपेक्षासामर्थ्यान्वयैकार्थीभावदोषहानगुणोपादानालङ्कारसा-वियोगरूपाः शब्दार्थयोर्द्वादशसमर्थाः साहित्यमुच्यते"[२] इत्येवं तात्पर्यस्य साहित्यावयवतया प्रतिष्ठामाविष्कृत्य तस्य त्रैविध्यमेवं प्रतिपादयति--

'यत्परः शब्दः स शब्दार्थः' इति तात्पर्यम् । तच्च वाक्य एवोपपद्यते । पदमात्रेणाभि-प्रायस्य प्रकाशयितुमशक्यत्वात् । तच्च वाक्यप्रतिपद्यं । वस्तु त्रिरूपं भवति--( १ ) अभिधीय-मानम्; ( २ ) प्रतीयमानम्; ( ३ ) ध्वनिरूपं च[३] । एतेषां विवरणानि चैवमुपस्थापयति--

( १ ) "यदुपात्तशब्देषु मुख्या-गौणी-लक्षणाभिः शब्दशक्तिभिः स्वमर्थमभिधायोपर-तव्यापारेषु आकांक्षा-सन्निधि-योग्यतादिभिर्वाक्यार्थमात्रमभिधीयते, तद् अभिधीयमानम्, यथा गौर्गच्छति" इति[४] ।

( २ ) वाक्यार्थावगतेरुत्तरकालं वाक्यार्थं उपपद्यमानोऽनुपपद्यमानो वा अर्थप्रकरणौ-चित्यादिसहकृतौ यत् प्रत्याययति, तत् प्रतीयमानम्, यथा "विषं भुंक्ष्व, मा चास्य गृहे भुंक्ष्व" इत्युक्ते "वरं विषं भक्षितम्, न पुनरस्य गृहे भुक्तम्" इति प्रतीयते ।[५]

( ३ ) अर्थशब्दोपायादुपसर्जनीकृतस्वार्थो वाक्यार्थावगतेरनन्तरमनुनादरूपं प्रति-शब्दरूपं वा [ यद् ] अभिव्यञ्जयति, तद् ध्वनिरूपम । तच्च न सार्वत्रिकम् । तथा हि निवृत्तेऽभिघाते कस्यचिदेव कांस्यादेर्द्रव्यस्यानुनादो जायते, कस्यचिदेव कन्दरादेः प्रतिशब्दः, तथा कस्यचिदेव वाक्यस्य प्रतीयमानाभिधीयमानवाक्यार्थप्रतीतेरनन्तरं ध्वनिरुपलभ्यते । निमिषत्येषेत्युक्तेऽक्ष्णोर्निमेषोऽभिधीयते, देवी न भवतीति प्रतीयते, रूपातिशयश्च ध्वन्यते[६] इति ।

---

१. दशरूपकावलोकः--४।३७ ।
२. शृङ्गारप्रकाशस्य मैसूरसंस्करणे सप्तमप्रकाशावतरणिका, अस्माकं साहित्यतत्त्वविमर्शश्च ।
३-५. डा० राघवस्य 'भोजस्य शृङ्गारप्रकाशः' [ Bhoja's Śrngaraprakasha ] इति ग्रन्थः । तत्र पृ० १७३-७४ ।
६. डा० राघवस्य कृतौ 'भोजस्य शृङ्गारप्रकाशः' इति ग्रन्थे 'रूपातिशयं ध्वनति' इति मुद्रितं लभ्यते पृ० १७४ ।

'प्राप्तश्रीरेष' इत्यादिपद्ये च त्रितयमप्येतत् संगमयँल्लिखति—

"अत्र[१] वर्णनीयराजविशेषस्य विजयिनो यथाश्रुतवाक्यार्थोऽभिधीयमानः, त्वयीति पदे विष्ण्वध्यवसायादवतारस्त्वमसीति प्रतीयमानः, तदवतारान्तराणां निद्रालसत्वादिदोषयोगादस्य च तद्व्युदासात्, ततो वैशिष्ट्यप्रतिपादनं तात्पर्यम्, यस्य काव्येषु ध्वनिरिति प्रसिद्धिः" इति।

(४) ध्वनितात्पर्ययोर्भेदमप्यसावेवं दर्शयति—कः पुनः काव्यवचसोर्ध्वनितात्पर्ययोर्विशेषः? उच्यते—

यदभिप्रायसर्वस्वं वक्तुर्वाक्यात् प्रतीयते।
तात्पर्यमर्थधर्मस्तत् शब्दधर्मः पुनर्ध्वनिः॥
सौभाग्यमिव तात्पर्यमान्तरो गुण इष्यते।
वाग्देवताया लावण्यमिव बाह्यस्ततो ध्वनिः॥
अदूरविप्रकर्षा तु द्वयेन द्वयमुच्यते।
यथा सुरभिवैशाखौ मधु-माधव-संज्ञया[२]॥ इति।

इदमप्यसौ कथयति यल्लोकवाक्ये यत् तात्पर्यं तदेव काव्यवाक्ये ध्वनिः। तथैवोच्यते यथा वल्लभावपुषि यदेव सौन्दर्यं लावण्यमित्युच्यते तदेव वल्लभगुणेषु सौभाग्यमिति। सर्वं च तद् दाम्पत्यसौमनस्यविधृतं विराजते। यदुच्यत एतेन—

तात्पर्यमेव वचसि ध्वनिरेव काव्ये सौभाग्यमेव गुणसंपदि वल्लभस्य।
लावण्यमेव वपुषि स्वदतेऽङ्गनायाः शृङ्गार एव हृदि मानवतो जनस्य[३]॥ इति।

---

१. उक्त एव ग्रन्थे 'विष्ण्वध्यवसायावतार' इति पाठः, पृ० १८०।

२. उक्त एव ग्रन्थे पृ० १८०।

३. उक्त एव ग्रन्थे पृ० १८०। अत्रेदमवधेयं यद् वक्रोक्तिजीवितकारः कुन्तकोऽपि ध्वन्यालोकस्य लावण्येन ध्वनेरुपमां सौभाग्येन परिवर्तयते लिखति च—

'ननु च कैश्चित् प्रतीयमानं वस्तु ललनालावण्यसाम्याल्लावण्यमित्युपपादितम्—

'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत् तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु॥ इति।

तत् कथं बन्धसौन्दर्यमात्रं लावण्यमित्यभिधीयते? नैष दोषः, यस्मादनेन दृष्टान्तेन वाच्यवाचकलक्षणप्रसिद्धावयवातिरिक्तत्वेनास्तित्वमात्रं साध्यते प्रतीयमानस्य, न पुनः सकललोकलोचनसंवेद्यस्य ललनालावण्यस्य सहृदयहृदयानामेव संवेद्यं सत् प्रतीयमानं समीकर्तुं पार्यते। तच्च बन्धसौन्दर्यमेवाव्युत्पन्नपद-पदार्थानामपि श्रवणमात्रेणैव हृदयहारित्वस्पर्धया व्यपदिश्यते। प्रतीयमानं पुनः काव्यपरमार्थज्ञानामेवानुभवगोचरतां प्रतिपद्यते। यथा कामिनीनां किमपि सौभाग्यं तदुपभोगोचितानामेव नायकानां संवेद्यतामर्हति"—वक्रोक्तिजीवितस्य १.३३ कारिकावृत्तिः।

सर्वथा भोजराजस्य भेदाभेदगाथेयं ध्वनितात्पर्ययो समन्वयमात्रप्रयोजनिका प्रतिभाति, न तु तत्त्वनिरूपणात्मिका। तदत्र ध्वनितात्पर्ययोर्मध्ये शृङ्गारप्रकाशनामकस्य साहित्यप्रकाशस्य रचयिता भोजराजो माधववसन्तयोरिव सामान्यविशेषभावरूपं व्याप्यव्यापकभावं सिद्धान्तयति।

(५) अभिनवगुप्ताचार्यो विषयभेदेन वृत्तिभेदमूरीकृत्य ध्वनितात्पर्ययोर्भेदं चिकीर्षुस्तात्पर्यस्य पदार्थान्वयमात्रनियतत्वमामनति। ततस्तन्मते 'घटम्' इत्युक्ते घटत्वावच्छिन्न-कर्मत्वावच्छिन्नयोरन्वय एवाभेदात्मा तात्पर्यविषयतामाजिहीते। एतच्च तस्यैव--

(क) "समयापेक्षा वाच्यावगमनशक्तिरभिधाशक्तिः, तदन्यथानुपपत्तिसहायार्थावबोधनशक्तिस्तात्पर्यशक्तिः, मुख्यार्थ-बाधादि-सहकार्यपेक्षयार्थप्रतिभासनशक्तिर्लक्षणाशक्तिः, तच्छक्तित्रितयोपजनितार्थावगमनमूलजाततत्प्रतिभास-पवित्रित-प्रतिपत्तृ-प्रतिभा-सहायार्थद्योतनशक्तिर्ध्वननव्यापारः। सहकारिभेदाच्च शक्तिभेदः स्पष्ट एव। यथा तस्यैव शब्दस्य व्याप्तिस्मृत्यादिसहकृतस्य विवक्षावगतावनुमापकत्वव्यापारः, अक्षादिसहकृतस्य वा विकल्पकत्वव्यापारः। एवमभिहितान्वयवादिनामियदनपह्नवनीयम्। योऽप्यन्विताभिधानवादी 'यत्परः शब्दः स शब्दार्थः' इति हृदये गृहीत्वा शरवदभिधाव्यापारमेव[1] दीर्घदीर्घमिच्छति तस्य यदि दीर्घो व्यापारस्तदेकोऽसाविति कुतः, भिन्नविषयत्वात्। अथानेकोऽसौ तद्विषयसहकारिभेदादसजातीय एव युक्तः। सजातीये च कार्ये विरम्य व्यापारः शब्दकर्मबुद्ध्यादीनां पदार्थविद्भिर्निषिद्धः। असजातीये चास्मन्नय एव"। इति (ध्वन्या० लोचनस्य चौखं० सं०, पृ० ६३, वि० सं० १९९७)

(ख) "यस्तु तात्पर्यशक्तिमेव ध्वननं मन्यते स न वस्तुतत्त्ववेदी। विभावानुभावप्रतिपादके हि वाक्ये तात्पर्यशक्तिर्भेदे संसर्गे वा[2] पर्यवस्येत्, न तु रस्यमानतासारे रसे" इति।
(तदेव पृ० ८४)

---

१. अत्र कौमुदीकार उत्तुङ्गोदयः—
(अ) "यथा धानुष्केण केनापि क्षिप्रहस्तेन क्षिप्तः शरः' शरीरावरणं शरीरं च विनिर्भिद्य प्राणानादाय पृथिवीं प्राप्नोति, तद्वदान्तरालिकानेककक्ष्यास्कन्दनक्रमेण पर्यन्तकक्ष्यापर्यन्तमेकैवाभिधाभिधावत्येवेत्यर्थः। इति (कुप्पुस्वामिसंस्करणम् पृ० ११९)।
(ब) "व्यापारस्य हि विषयमुखेनैव स्वरूपप्रतिलम्भः, न स्वरूपेण। अतो विषयभेदे स्थिते सति तन्निबन्धनो व्यापारभेदोऽप्यवश्यं भवन् न निवारयितुं शक्य इत्यर्थः।" (कुप्पुस्वामिसंस्करणम्, पृ० ११९)
२. अत्रोच्यते कौमुदीकृता—"विशेषविषया हि तात्पर्यशक्तिः। विशेषश्चैकस्य वाक्यार्थस्य वाक्यार्थान्तराद् भेदापरपर्याया व्यावृत्तिरेव व्यावर्तकभूतविशेषणसंबन्धो वा 'गामानय' इत्यत्र गोकर्मकानयनविशेषस्य अश्वादिकर्मकानयनादितो व्यावृत्तिप्रतीतेः, तस्याः क्रियाकारकसंबन्धनिमित्तत्वाच्च। अत एव भेदो वाक्यार्थः संसर्गो वेति वैकल्पिकी वाक्यार्थविदां स्थितिः। रसादिरर्थस्तु स न भेदरूपः संसर्गरूपो वा, सिद्धस्वभावत्वाभावात्। रस्यमानतैकसारो ह्यसावलौकिकोऽर्थः। तेन तात्पर्यशक्तिगोचरातिलंघी चतुर्थकक्ष्यानिविष्ट एव।" (तस्यैव पृ० १५७)
'राजभृत्यः' इत्यादौ स्वाम्यन्तराद् भृत्यविशेषव्यावृत्तिर्भेद इति तु साहित्यमीमांसायाः २।७ वृत्तौ साहित्यमीमांसाकारः।

(ग) 'ननु 'यत्परः शब्दः स शब्दार्थः' इति व्यङ्ग्यस्य प्राधान्ये वाच्यत्वमेव न्याय्यम्, तर्हि अप्राधान्ये किं युक्तं व्यङ्ग्यमिति चेत्, सिद्धो नः पक्षः।" इति, (तदेव ४२२ पृ०)

एवं प्रभृतिभिरन्यैश्च युक्त्युपन्यासैर्ध्वन्यालोकलोचनाद् विस्पष्टम्।

(६) श्रीमन्महिमाचार्यः [१०५० खी०] प्रतीयमानमात्रस्य तात्पर्यरूपत्वमुत्प्रेक्षते। स—

'विषं भक्षय मा चास्य गृहे भुंक्था' इत्यादावपि यदेतद् विषभक्षणानुज्ञानं तदर्थ-प्रकरणादिसहायम्। एतद्गृहे भोजनस्य ततोऽपि दारुणतरपरिणामत्वमनुमापयति। विष-भक्षणानुज्ञानादेर्वाक्यार्थस्याप्रस्तुतस्यैवोपन्यासो हि पूर्वोक्तेन नयेन प्रस्तुतातिरिक्तार्थान्तर-प्रतिपादनपरत्वात्। तत्र हेतुतयावगन्तव्य इति न शब्दस्य तत्र व्यापारः परिकल्पनीयः।

'विषभक्षणादपि परामेतद्गृहभोजनस्य दारुणताम्।
वाच्यादतोऽनुमिमते प्रकरण-वक्तृ-स्वरूपज्ञाः॥
विषभक्षणमनुमनुते न हि कश्चिदकाण्ड एव सुहृदि सुधीः।
तेनात्रार्थान्तरगतिरार्थी तात्पर्यशक्तिजा न पुनः॥'[१]

इत्येवं तात्पर्यस्यानुमानातिरिक्तत्वं नाभ्युपैति। ततश्च सिद्धमेतन्मते तात्पर्यविषयस्यानु-मानविषयतया प्रतीयमानत्वमात्रम्। असौ ध्वनिमपि प्रतीयमानात्मन्यनुमानगम्येऽनुमेय एवार्थे गतार्थयतीति प्रायेण भोजराजसरणिमनुसरति। अयमेव तत्र विशेषो यद् भोजराजस्तात्पर्येऽर्थेऽ-र्थान्तरमन्तर्भावयति, असौ पुनरनुमानरूपे प्रतीयमान इति।

(७) मम्मटभट्टः [ ११२० खी० ] तात्पर्यस्य द्वैरूप्यमुत्पश्यति। एकमभिनवगुप्तप्रतिष्ठा-पितमन्वयरूपमेव, अपरं च मीमांसकप्रसिद्धं विधेयार्थरूपम्। काव्यप्रकाशे स शास्त्रान्तरसिद्धान्तो-ल्लेखावसरे 'आकांक्षायोग्यता-सन्निधि-वशात् पदार्थानां समन्वये विशेषवपुरपदार्थोऽपि वाक्यार्थः समुल्लसतीत्यभिहितान्वयवादिनां मतम्, वाच्य एव वाक्यार्थ इत्यन्विताभिधान-वादिनः' इति वाक्यार्थरूपस्य पदार्थसंसर्गात्मकस्यैवार्थस्य स्ववाचकपदानुपयोगाद् विशेषवपुष्ट्व-मपदार्थत्वं च, वाक्यात्मकशब्दबोधिततया च शब्दत्वव्याप्यवाक्यत्वावच्छिन्नहेतुताकत्वं द्वितीय उल्लासे प्रतिपित्सते. पञ्चमे च तस्मिन् 'यत्परः शब्दः स शब्दार्थः' इति पार्यन्तिकोऽ-प्यर्थः शब्दबोध्य एवेति च दीर्घदीर्घाभिधाव्यापारादेव ध्वन्यमानस्यार्थस्य शाब्दत्वेनाभिधान-मुरीचिकीर्षन्तं तात्पर्यवादिनमन्विताभिधानिनं निराचिकीर्षन्नेवमुत्क्रोशते—

---

१. व्यक्तिविवेकस्यास्मत्कृतानुवादसहितसंस्करणम्, पृ० १३३, संग्रहकारिके १।६७-६८ व्य० वि०।

"ये त्वभिदधति 'सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापारः' इति 'यत्परः शब्दः स शब्दार्थः' इति च (निश्शेषच्युतचन्दनादिध्वनिस्थलेषु) विधिरेव वाच्य इति तेऽप्यतात्पर्यज्ञास्तात्पर्यवाचोयुक्तेर्देवानां प्रियाः। तथा हि भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते, ततश्चादग्धदहनन्यायेन यावदप्राप्तं तावदेव विधीयते, ततश्च यदेव विधेयं तत्रैव तात्पर्यमित्युपात्तस्यैव शब्दस्यार्थे तात्पर्यम्, न तु प्रतीतमात्रे। 'विषं भक्षय' इत्यस्यापि वाक्यस्य 'मा चास्य गृहे भुंक्थाः' इति उपात्त एव चकारप्रतिबोध्ये वाक्यार्थशेषे तात्पर्यम्" इति।[1]

अस्मिन्नेव संदर्भेऽसावभिनवगुप्तोन्मीलिताम्—"अतिशयानुशीलनाभ्यासात् तत्र पदार्थवाक्यार्थयोः संभाव्यमानोऽपि क्रमः सजातीय-तद्विकल्पपरम्परानुदयाद् अभ्यस्तविषयव्याप्तिस्मृतिक्रमवद् न संवेद्यते। निमित्तनैमित्तिकभावश्चावश्यमाश्रयणीयः, अन्यथा गौण-लाक्षणिकयोर्मुख्याद् भेदः, श्रुतिलिंगादिप्रमाणषट्कस्य पारदौर्बल्यमित्यादिप्रक्रियाविघातः, निमित्तता-वैचित्र्येणैवास्याः समर्थितत्वात्, निमित्ततावैचित्र्ये चाभ्युपगते किमपरमस्मास्वसूयया"[2]।

इतीमां दिशमनुवर्त्तमानस्तात्पर्यवादिनमेवमप्याक्षिपति—

"यदि च शब्दश्रुतेरनन्तरं यावानर्थो लभ्यते तावति शब्दस्यैवाभिधा व्यापारः, ततः कथं 'ब्राह्मण पुत्रस्ते जातः, ब्राह्मण कन्या ते गर्भिणी' इत्यादौ हर्षशोकादीनामपि न वाच्यत्वम्? कस्माच्च लक्षणा, लक्षणीयेऽप्यर्थे दीर्घदीर्घतराभिधाव्यापारेणैव प्रतीतिसिद्धेः। किमिति च श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पूर्वपूर्वबलीयस्त्वम्[3]—इति।

---

१. अत्र चण्डीदासः काव्यप्रकाशदीपिकायाम्—
(क) "यथा खल्विपुर्धनुष्मता मुक्त एकेनैव वेगव्यापारेण वैरिणः कवचत्वगादिकं सर्वमेव निर्भिनत्ति, तथा शब्दोऽप्येकेनैवाभिधाव्यापारेण यावदुद्देश्यं प्रकाशयति, यत्परः यदुद्देश्येन प्रयुक्तः शब्दः स शब्दार्थः शब्देनावश्यं बोध्यः, अन्यथा तत्प्रयोगवैयर्थ्यप्रसंगात्"। इति,
(ख) अयमत्र तात्पर्यार्थः—भूतानि कारकाणि सिद्धरूपाणि. भवत् क्रियारूपं साध्यम्, तेषां समुच्चारणे समभिव्याहारेण तद्वाचकपदानामुच्चारणे भव्यतया समुदितकारकात्मकसाध्यपरतया"।
(ग) तात्पर्यस्योपात्तपदार्थसंसर्गमात्रे संसृष्टाकारप्रधानपदार्थे वा परिक्षीणत्वात्।

२. ध्वन्यालोकलोचनस्य चौखंबासंस्करणे पृ० ६७। अत्र कौमुदीकारः—
"शीघ्रविलम्बितप्रवृत्तिकत्वनिबन्धने ह्येतेषां पूर्वप्राबल्यदौर्बल्ये, तच्च निमित्त-नानात्वकृतमेव, तुल्यव्यापारत्वे सति हि तत्प्रवृत्तेः शैघ्र्यविलम्बितत्वविशेषः निर्निबन्धनः स्यात्। अतो-लौकिकवैदिकप्रमाणव्यवस्थामवस्थापयता निमित्तनैमित्तिकभावोऽवश्यमभ्युपेयः" इति।
(कुप्पुस्वामिसंस्करणम्, पृ० १२४)

३. काव्यप्रकाशपञ्चम उल्लासे। अस्य विवरणं काव्यप्रदीपे द्रष्टव्यम्।

एतेन सिद्धं यद् मम्मटाचार्यो मीमांसानुगन्तारं तात्पर्यवादिनं मीमांसापथेनैव पराजिगीषति, अभिधीयमानत्वं च तात्पर्यस्य प्रत्यभिजिज्ञापयिषति। ततश्चैतन्मते व्यक्तमेव तात्पर्यार्थो ध्वनेर्दूरं भिन्नः।

(८) भावप्रकाशनकारः शारदातनयः [१२५० खी०] काव्यप्रकाशकारं मम्मटमुपजीव्य प्रवर्त्तमानोऽपि तात्पर्यविषयस्य विषये समन्वयवादमेव भोजोपज्ञमुपजिजीविषति। स भोजराजस्य कृत्स्नामपि प्रागुद्धृतां तात्पर्य-त्रैविध्यगाथामक्षरश एवं कारिकाबद्धां करोति---

"द्वादशधा संबन्धः शब्दस्यार्थस्य यः स साहित्यम्।
त्रिस्स्कन्धः स चतुर्भिस्तनुभिः स्याच्चतुश्चतुर्भिश्च॥
वृत्तिर्विवक्षा तात्पर्यप्रविभागविहोदितौ।
ततो व्यपेक्षासामर्थ्यान्वयाश्चैकार्थभावना॥
दोषहानं गुणादानं तथालङ्कारयोगिता।
रसावियोग इत्येते संबन्धाः कथिता बुधैः॥
वृत्तिस्त्रिधा पदार्थेषु पदानामुच्यते बुधैः।
अभिधा लक्षणा गौणीत्येतासां रूपमुच्यते॥
शब्दार्थयोः समन्यूनाधिकताभेदतस्त्रिधा।
विवक्षा सा तु संदर्भे कविभिस्तु नियम्यते॥
वाक्यार्थं प्रति शेषत्वं यत् स्यादुच्चारणस्य तु।
तत् तात्पर्यं त्रिधा तत् स्याद् वाक्यार्थत्रिविधत्वतः॥
स चाभिधेयः प्रत्याय्यो ध्वनिरूप इति त्रिधा।
कारकादिविशिष्टो यः सोऽभिधेयः क्रियादिकः॥
यथाभिधीयमानार्थादन्यथानुपपत्तितः।
प्रतीयमानो वाक्यार्थो यः स प्रत्याय्य ईरितः॥
विषं भुंक्ष्वेति वाक्यादावेष तादृक् प्रतीयते।
ध्वनिर्द्विधा स चैकः स्यादर्थतः शब्दतोऽपरः॥
यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः॥ इति।[१]

---

१. भावप्रकाशनस्य षष्ठेऽधिकारे। बड़ौदासंस्करणस्य पृ० १४५–५०।

धनिकस्य काव्यनिर्णयकारिकाभिः पूर्वं द्वितीयतृतीयमतत्वेन प्रतिपादितां ध्वनि-तात्पर्यभेदाभेदव्यवस्थामप्यसौ ( भावप्रकाशनकारः )—

ध्वनितात्पर्ययोः कैश्चित् पृथक्त्वं कथ्यते बुधैः।
अप्रतिष्ठम······ ध्वनिना स्थितिः॥[१]
ध्वनितात्पर्ययोर्भेदं केचिन्नेच्छन्ति तन्मते।
समानलक्षणत्वाच्च तयोर्न न च पृथक् स्थितिः॥

उक्तं च टीकाकारैश्च तयोरैक्यं प्रति क्वचित्—

एतावतैव विश्रान्तिस्तात्पर्यस्येति किं कृतम्।
यावत्कार्यप्रसारित्वात् तात्पर्यं न तुलाधृतम्॥[२]

इति प्रस्तवीति। अन्ते च भोजोपनतां व्याप्यव्यापकभावेन स्थितां ध्वनितात्पर्ययोः स्थितिमपि ब्राह्मणब्रह्मचारिदृष्टान्तेन—

ध्वनितात्पर्ययोर्भेदो ब्राह्मणब्रह्मचारिवत्।
तदवान्तरभेदो हि प्रायेण पृथगुच्यते॥[३]

इति उद्धरति, निगमयति चामुं कृत्स्नमपि प्रपञ्चमेवम्—

अतो ध्वन्यर्थतात्पर्यगम्यमानत्वतः स्वतः।
काव्ये रसालङ्कारादिर्वाक्यार्थो भवति ध्रुवम्॥
एवं त्रिरूपं तात्पर्यं तत्तत्तात्पर्यवेदिभिः।
वक्तृद्वारा वाक्यधर्म एवेति परिकीर्त्यते॥[४]

इति भोजराजः "संबन्धो [अन्वयो] नाम अहानिर्व्यपेक्षा व्यतिषंगः"[५] इति स्वलक्षितमन्वयतत्त्वाख्यं साहित्यं पूर्वचर्चितस्य तात्पर्यस्य प्रथमाद् भेदाद् भेदयितुं न यतते; नापि च तदुपज्ञमेवार्थं "परस्परस्य ग्रथनं पदार्थानामिहान्वयः"[६] इति श्लोकयन् साहित्यमीमांसाकारः। शारदातनयस्तु यतते। स पदार्थगततया नीतमन्वयममुं पदगततया नयति, वक्ति च—

१. अस्यैवानुच्छेदस्य द्वितीये भागे कारिकेयं पूर्णमुद्धृतास्ति।
२. भावप्रकाशनस्य बड़ौदासंस्करणे पृ० १५०।
३. तस्यैव पृ० १५०।
४. तस्यैव तदेव पृ०।
५. शृङ्गारप्रकाशस्य मैसूरसंस्क० पृ० २८४।
६. साहित्यमीमांसाप्रक० १।

"परस्परस्य ग्रथनं पदानामन्वयः स्मृतः"[1] इति। युक्तं चैतत्, पद्येषु गद्यबन्धेषु च यथाकारकान्वयम्,पदप्रयोगस्यानुपलब्धेः। स्पष्टं चैतत् 'ततो मृगेन्द्रस्य मृगेन्द्रगामी' इत्यादिषु[2] "विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः"[3] इत्यादिषु कादम्बर्यादिगद्यबन्धेषु च तिलतण्डुलवत्,[4] नीरक्षीरवत्, पांसूदकवद् वा महाकविभिः संदृब्धेषु पदरत्नेषु।

एवं तात्पर्यमन्वयादपाकृत्य दर्शितप्राज्ञभावो भावप्रकाशनकारो भोजनरेन्द्रस्य 'तात्पर्यमेव वचसि'–इति प्रागुद्धृतं समन्वयमन्त्रमपि प्रस्तावेऽत्रोद्धरति। इत्थं ध्वनिसम्प्रदाये श्रद्दधानोऽपि शारदातनय एवमत्र तात्पर्यं प्रति भृशमाद्रियमाणो लक्ष्यते, तस्य महाविषयतायां च सिद्धान्तबुद्धिं द्रढयति।

(६) साहित्यमीमांसाकारोऽपि [११५० खी०] तात्पर्यं प्रति दर्शितादरानेतानाचार्याननितरामाद्रियते ब्रूते च––[5]"अपदार्थोऽपि वाक्यार्थो रसस्तात्पर्यवृत्तितः"। इति।

विवृणोति चैतदेवैवं पूर्वोत्तराभ्यां पक्षाभ्याम्—

"नन्वद्वितीयकक्ष्यावगाहि तात्पर्यं प्रथमम्। अतो विभावादिपदार्थसंसर्गप्रतीतिमतो वाक्यस्य तदविनाभूतरामादिरसलक्षणा द्वितीयकक्ष्या। तदतिलंघिततृतीयपर्वभूततत्सहृदयसामाजिकरसप्रतिपादनं ध्वनेर्विषयः कथं तात्पर्यस्येति चेदुच्यते, यथा तात्पर्यमनुद्देश्यत्वात् प्रथमं पर्व विहाय द्वितीयमवगाहते, तथैतदपि परित्यज्य तृतीयमपि स्पृशेत्।

उक्तमाचार्यैः—

तत्तत्कक्ष्याविभेदेऽपि बहुधा प्रसृता सती।
तात्पर्यवृत्तिरुद्देश्यं यावन्न प्रतिहन्यते॥
एतावतैव........................"तुलाधृतम्[6]॥
तत्तत्कक्ष्याविभागेन वाक्यतात्पर्यकन्दली।
यथारुच्यभिधा वस्तुध्वनिर्वा वृत्तिरेव वा॥
कविश्च रसमुद्दिश्य सूक्तिमुद्राः करोति हि।
सामाजिकानां हृदयं रसयेयमहं कथम्॥

---

१. भावप्रकाशस्य पृ० १५१।
२. रघुवंशस्य २।३०।
३. मेघदूतस्य २।१।
४. भावप्र० पृ० १५१। एवमेव शृङ्गारप्रकाशे साहित्यमीमांसायामपि।
५. साहित्यमीमांसा ६।१७।
६. शारदातनयप्रकरण इहैवोद्धृतम्।

इति प्रवर्त्तते काव्ये कविस्तत्परमानसः ।
विशिष्टैः शब्दसंदर्भैर्ज्ञापयेयं रसं यतः ॥
इति प्रवृत्ते सुकवौ तेषामुत्पद्यते रसः ।'[1] इति ।

एतदेव च धनञ्जयस्य—

वाच्या प्रकरणादिभ्यो बुद्धिस्था वा यथा क्रिया ।
वाक्यार्थः कारकैर्युक्ता स्थायी भावस्तथेतरैः ॥
रसः स स्वाद्यत्वाद् रसिकस्यैव वर्त्तनात् ।
नानुकार्यस्य वृत्तत्वात् काव्यस्यातत्परत्वतः ॥[2]

इत्येताभ्यां कारिकाभ्यां प्रगुणयति । विवरणेनैतेन स्पष्टं यत् साहित्यमीमांसाकारो ध्वनितत्त्वमपि तात्पर्यतत्त्व एव अन्तर्भावयति धनञ्जय-धनिकपदवीमेव च काव्यस्योपनिषद्भूतायार्थायौपायिकं मनुते ।

(१०) साहित्यदर्पणकारो विश्वनाथमहापात्रः [ १३१० खी० ] पुनरभिनवगुप्तमम्मटपक्षाभिनिविष्टः सन् तदुन्मीलितेनाध्वना तात्पर्यवादिन एवं प्रतिक्षिपति—

"अथ केयमभिनवा व्यञ्जना नाम वृत्तिरित्युच्यते—

वृत्तीनां विश्रान्तेरभिधा-तात्पर्यलक्षणाख्यानाम् ।
अङ्गीकार्या तुर्या वृत्तिर्बोधे रसादीनाम् ॥" इति ।

अभिहितान्वयवादिभिरङ्गीकृता तात्पर्याख्या वृत्तिः संसर्गमात्रे परिक्षीणा न व्यंग्यबोधिनी । यच्च केचिदाहुः—"सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापारः"—इति । यच्च धनिकेनोक्तम्—

तात्पर्याव्यतिरेकाच्च व्यञ्जकत्वस्य न ध्वनिः ।
यावत्कार्यप्रसारित्वात् तात्पर्यं न तुलाधृतम् ॥ इति ।

तयोरुपरि 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इतिवादिभिरेव पातनीयो दण्डः । एवं च किमिति लक्षणापि, दीर्घदीर्घतराभिधाव्यापारेणापि तदर्थबोधसिद्धेः । किमिति च 'ब्राह्मण पुत्रस्ते जातः, कन्या ते गर्भिणी' इत्यादावपि हर्षशोकादीनामपि न वाच्यत्वम् ।

१. साहित्यमीमांसा प्रक० ६ । २. दशरूपकस्य चतुर्थे प्रकाशे ।

यत् पुनरुक्तम् "पौरुषेयमपौरुषेयं च वाक्यं सर्वमेव कार्यपरम्, अतत्परत्वे अनुपादेयत्वादुन्मत्तवाक्यवत्। ततश्च काव्यशब्दानां निरतिशयसुखास्वादव्यतिरेकेण प्रतिपाद्यप्रतिपादकयोः प्रवृत्त्यौपयिकप्रयोजनानुपलब्धेर्निरतिशयसुखास्वाद एव कार्यत्वेनावधार्यते 'यत्परः शब्दः स शब्दार्थः, इति न्यायात्" इति। तत्र प्रष्टव्यम्, किमिदं तत्परत्वं नाम? तदर्थत्वं वा, तात्पर्यवृत्त्या तद्बोधकत्वं वा? आद्ये न विवादः, व्यंग्यत्वेऽपि तदर्थतानपायात्। द्वितीये तु केयं तात्पर्याख्या वृत्तिः? अभिहितान्वयवादिभिरङ्गीकृता तदन्या वा? आद्ये दत्तमेवोत्तरम्[1], द्वितीये तु नाममात्रे विवादः, तन्मतेऽपि तुरीयवृत्तिसिद्धेः।

नन्वस्तु युगपदेव तात्पर्यशक्त्या विभावादिसंसर्गस्य रसादेश्च प्रकाशनमिति चेत्, न; तयोर्हेतुफलभावाङ्गीकारात्। यदाह मुनिः "विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः" इति। सहभावे च कुतः सव्येतरविषाणयोरिव कार्यकारणभावः, पौर्वापर्यविपर्ययात्॥[2]

(११) प्रायेण साहित्यदर्पणकृदेककालिकः प्रतापरुद्रयशोभूषणवेधा विद्यानाथो ध्वनितात्पर्ययोरैक्यमेव स्वीचक्रे—"तात्पर्यार्थोऽपि व्यङ्ग्यार्थ एव, न पुनः पृथग्भूतः"[3] इत्येवमाचक्षाणः। एतट्टीकाकारः कोलाचलमल्लिनाथसूरिसूनुः श्रीकुमारस्वामी विषयममुमेवं संरम्भेण स्थिरयति—

'तात्पर्यार्थः' इति। अत्र वक्तृबुद्धिसन्निधापितो वाक्यावगम्यो वाक्यार्थो रसादिरूपस्तच्छब्देनोच्यते। तस्मिन् परास्तत्पराः, तदासक्तास्तद्विषया इत्यर्थः, तेषां भावस्तात्पर्यम्।

नन्वभिहितानां पदार्थानामर्थाभिधायिनां वा पदानां विशिष्टार्थप्रत्यायनशक्तिस्तात्पर्यमिति मतभेदेन मीमांसका वर्णयन्ति। अतस्तन्मते 'देवदत्त दण्डेन गामानय' इत्यादौ देवदत्तकर्तृक-दण्डकरणकगोकर्मकानयनरूपो विशिष्टार्थ एव व्यङ्ग्यत्वविधुरस्तात्पर्यादवगतत्वात् तात्पर्यार्थ इत्युच्यते, [ तत् ] कथमस्य व्यङ्ग्येऽन्तर्भाव इति चेत्, सत्यम्; न हि तावन्मात्रे कविसंरम्भविश्रान्तिः, काव्यशब्दानामन्वयव्यतिरेकाभ्यां प्रवृत्तिनिवृत्तिविषयभूतस्य प्रधानस्य प्रयोजनान्तरस्यासंभवात्, किन्तु तदर्थ-न्यक्कारेण प्रतीयमाने सामाजिकानन्दास्वादफले रसावर्थान्तरे। अतः स एव तात्पर्यार्थः। तत्प्रत्यायकपदार्थशक्तिरेव तात्पर्यं कविसमये। तच्च नाभिधा, स्वार्थे संकेताभावात्, नापि लक्षणा, मुख्यार्थबाधाद्यभावात्। अतो वक्ष्यमाणलक्षणस्य व्यञ्जनस्यैवेदं नामान्तरकरणमिति तदर्थस्य व्यङ्ग्यार्थत्वमेव। तर्ह्यत्र संसर्गरूपो

---

१. तात्पर्याख्या वृत्तिः संसर्गमात्रे परिक्षीणेति। २. साहित्यदर्पणस्य पञ्चमे परिच्छेदे।

३. प्रतापरुद्रयशोभूषणस्य १।५-कारिकावृत्तौ।

वाक्यार्थः कथं प्रतीयत इति चेत्, तार्किकाणामिव वाक्यमहिम्ना, न पुनस्तात्पर्येण मीमांसकानामिवेति ब्रूमः। अत एव ते वर्णयन्ति—"आकांक्षादिमत्त्वे सति पदानां पदार्थानां वा समन्वयशक्तिर्वाक्यम्, तद्बलायातो वाक्यार्थः। तात्पर्यार्थस्तु परिणतिविरसं पनसफलं परिणतिसरसमाम्रफलमित्यादिनिन्दाप्रशंसादिवाक्येषु हानोपादानादिरूप एव, नान्यः। [वस्तुतः] तात्पर्यमपि भावाभिप्रायाद्यपरपर्यायम् उद्देशो नाम वक्तृधर्मः, न मीमांसकानामिव वाक्यधर्मः। यद् वा—

अर्थान्तराभावे संसर्ग एव तात्पर्यार्थः। तत्सद्भावे तत्रैव प्रतीतिविश्रान्तेः स एव तात्पर्यार्थो न संसर्गः। काव्ये [ च ] संसर्गमात्रविश्रान्तिर्न संभवतीत्युक्तम्। तस्माद् व्यञ्जनापरपर्यायमेव तात्पर्यं कविभिरङ्गीकृतम्, नान्यदिति सिद्धम्। अत एवोक्तं भावप्रकाशे—

अतो ध्वन्याख्य-तात्पर्यगम्यमानत्वतः स्वतः।
काव्ये रसालंक्रियादिर्वाक्यार्थो भवति स्फुटम्॥ इति।

उक्तं च ध्वन्याचार्यैः—''यत्त्वभिप्रायविशेषरूपं व्यङ्ग्यं शब्दार्थाभ्यां प्रकाश्यते तद् भवति विवक्षितं तात्पर्येण प्रकाश्यमानम्" इति।[१]

संप्रदायेनानेन द्वयोरेवार्थयोस्तात्पर्यविषयत्वमेषितव्यकुक्षावापतत्यभिधेयस्य, लक्ष्यवर्जमनभिधेयस्य च। तत्राभिधेयत्वम्, अनभिधेयत्वव्याप्ये प्रतीयमानत्वव्यज्यमानत्वे चेति धर्मत्रयमपि यथास्वं विषयतामवच्छिनत्ति तात्पर्यस्य। यच्चेदमभिधेयत्वम्, अस्यापि व्याप्यतामश्नुवानो यः संसर्गः, यश्च तदुत्तीर्णो विधिनिषेधादिरर्थस्तदपि द्वितयमस्य विषयतामवच्छिन्देत्। तत्र सिद्धान्तताधीः क्व नु क्रियेतेति प्रश्ने तात्पर्यस्य स्वरूपमेवैकं शरणमिति तदेवेदानीमन्वीक्ष्यते।

### ३. तात्पर्यस्वरूपम्

प्रागुद्धृतैः संदर्भैरन्यैश्च तदधिकरणकैरनल्पसंख्यैस्तैरिदं न स्पष्टं यत् साहित्यसंप्रदाये तात्पर्यस्य स्वरूपे मतित्रैधं लभ्यते—

( १ ) एकं वाक्यात्मकशब्दशक्तिरूपम्।
( २ ) द्वितीयं प्राधान्यरूपम्।
( ३ ) तृतीयं च मानसाध्यवसायरूपम्।

---

१. तस्यैव रत्नापणनाम्नो भाष्यस्य संक्षेपः।

एष्वाद्यं साहित्यक्षेत्रे क्षेत्रान्तरीयम्, द्वितीयं तृतीयं च निर्विवादमपि व्यञ्जनानुमानादिनिर्विशेषमेव। यच्चेदमाद्यमस्य रूपं तद् वाक्यनिष्ठं सदपि शब्दशक्तेरभिधाया भिन्नमभिन्नं वेति वादमतिरत्रापि स्फुरन्ती लभ्यते, वाक्यस्यापि शब्दरूपत्वात्। अत्र येऽभिहितान्वयवादिनस्ते कोषव्याकरणादिभिरपि संकेतग्रहमभ्युपयन्तः पदार्थस्य वाक्यार्थतः स्वातन्त्र्यमूरीकृत्य प्रथमेऽभिधां द्वितीये च वैकल्पिकीं तात्पर्यशक्तिमुपयन्ति। पक्षे च प्रथमेऽ—[पदार्थे] भिधामात्रमूरीकृत्य द्वितीये [वाक्यार्थे] मानसाध्यवसायरूपमाकांक्षादित्रिकमेवाश्रित्य विश्राम्यन्ति, न ह्येवातिषजन्ते तात्पर्यस्य शक्तित्वे। ये पुनरन्विताभिधानिनो व्यवहारमात्राच्छक्तिग्रहमूरीकृत्य व्यवहर्त्तव्यताया एकमात्रे पात्रे वाक्यमात्रेऽभिधानाम्नीमाद्यां शक्तिं साक्षात्कुर्वन्ति तेष्वेके सम्बन्धस्य सामान्यं रूपं यावद् वीतप्रत्यूहां पदवीं लभन्ते, विशिष्टे चास्य रूपे विघ्निताभिधाशक्तिकास्तात्पर्यशक्तिमेवाशिश्रीषन्ते, अपरे पुनरभिधां पटुना धानुष्केण प्रयुक्ताया इषोः परप्राणापहारपार्यन्तिकीमविच्छिन्नसन्ततिं दीर्घदीर्घां व्यापृतिमिवाविघ्नितगतिकामेव स्वीचिकीर्षन्ति सम्बन्धविशेषावधि, इतरे च विवक्षितार्थावगतिपर्यन्तमिमां निनीषन्ति। तदत्र किं नु प्रतिपत्तव्यम्।

अत्र वयमेवमातिष्ठासामहे—यत्र ह्यर्थव्यवहारमात्रौपयिकाः शब्दसंकेतास्तत्रापाततोऽन्विताभिधानमेव सिद्धान्तीक्रियेत, यथा लोके। यत्र पुनर्नास्ति तादृशी स्थितिः, ततश्च वाङ्मयमात्रेणार्थकल्पनाः क्रियन्ते, तत्र पदवाक्यपदार्थवाक्यार्थरूपानुच्छेदकल्पनयैव प्रवृत्तिर्युज्येत। अपौरुषेयेषु वचनेषु दृश्यत एवैषा स्थितिः, तत्राद्यानामृषीणां या वचःप्रवृत्तिस्तामेवार्था अनुधावन्ति। सैव च स्थितिः कविप्रौढोक्तिमात्रनिष्पन्नात्मनामर्थानां पौरुषेयेष्वपि काव्यवाङ्मयेषु। ततश्चात्र व्यवहारेतरस्यैव संकेतग्राहकसमुदायस्य कोषव्याकरणादेराश्रयो युक्तः। तेन चाभिहितान्वय एवात्र शरणम्। एवं वादयोरनयोर्यथास्वं निष्पादितायां स्थितौ विचार्येत योऽयमेको न्यायो वेदार्थ इव शिरसि ध्रियते 'शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभावः' इति, यश्चासौ चरितार्थ्यते 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति, तत्र कानुतकौचिती? आनुभविकमेतदिति सम्प्रतिपत्तव्यमेवेति नास्त्येवात्रानौचितीकलङ्क इति चेत्, सत्यम्, योऽयमत्र विरामः स कीदृक्स्वरूपः? सोपानक्रमेणैकैकश उत्तरोत्तरमर्थविशेषावगतिनिष्पत्तिरूप इति चेत् सोपानसाहस्रीसमारोहणैकसमासाद्यां भूमिकामारुरुक्षुणा यदिदमेकं सोपानमाक्रम्यापरमाक्रम्यते तत्रास्य कालाश्रयविषयभेदेन भिन्नोऽपि गमनव्यापारः स्वरूपतोऽपि भिद्यते किम्? यदि भिद्यते तर्ह्यधिश्रयणावाश्रयणयोरान्तरालिका अपि व्यापारा भिद्यन्ताम्, प्रतिपद्यन्तां च ततः पाकक्रियाया-मप्यनेकासामवान्तरक्रियाणामस्तित्वम्, उच्छिन्तां च क्रियायाः पूर्वापरीभूतावयवरूपत्वम्।

यदि क्रियाङ्गभूतानां क्रियाणां स्वातन्त्र्यं नास्ति श्रीमाननवस्थाभिया स्वीचिकीर्षुः, तर्हि शब्दव्यापारेण किं नामापराद्धं यदवगमितविशेषणमिमं विशेष्यपर्यन्तमपि नेच्छति विसृत्वरम्। कश्चायं श्रीमतां व्यामोहो यदर्थगतां भिदां व्यापारशिरसि निपातयिषन्ति। यदि चानुच्छेद्य एवासौ विषयभेदेन व्यापारभेदस्यानुरोधस्तर्हि विमृशतु स्तोकमक्षिणी निमील्य यदभिनयौपयिकेषु सन्धिषु किं नाम प्रवृत्तिनिमित्तमिति। ननु नायकगतस्य वृत्तिरूपस्य तत्तद्वस्तुरूपार्थनिर्वर्त्तकस्यारम्भतोऽन्तं यावदभेदेनैव प्रक्रान्तत्वात् तन्निष्पन्नावान्तरार्थसंघटनमात्रं सन्धिषु तदिति यथार्थमुच्यते, तर्हि तादृशावान्तरार्थनिर्वर्त्तकेषु, तेषु तेष्ववान्तरेषु व्यापारेष्वनुस्यूततया विद्यमानं स्थायिभूतमपि कञ्चन व्यापारमत्र श्रीमन्तोऽभ्युपयन्ति, न वा ? यद्यभ्युपयन्ति तर्हि कथं तत्र कथावस्तुन एकत्वम् ? ननु फलनिष्पत्तिपर्यन्तमक्षुण्णतया विद्यमानत्वेन नायकव्यापारस्यैकत्वमेव, फलरूपस्य विषयस्याभिन्नत्वादिति नास्त्यवान्तरार्थभेदेनावान्तरव्यापारभेदेऽपि क्षतिरिति नास्ति प्रश्नस्याप्यवकाश इत्युच्यते, तर्हि काव्येन भवतां किमपराद्धं यदभिनयस्वीकृतामिमां सुबुद्धिं तत्र न व्यापारयन्ति। कथातन्तुसन्तानस्योभयत्राप्यविशेषेण प्रवृत्तेः सामाजिकान्तःकरणधारायाश्च रसैकतानतया स्थितेर्य एवाभिनये तर्कक्रमः स एव काव्येऽपि प्रयोज्यः। एवं चावस्थार्थप्रकृतिगतनायकव्यापारसन्धिष्वनतिसंधीयमानाः श्रीमन्तः पदार्थ-वाक्यार्थ-काव्यार्थ-बुद्धिधारायां कुतो न्वतिसन्धीयमाना दृश्यन्ते, दृश्यन्ते च जिघांसन्तो वक्तुः कवेः, प्रतिपत्तुः सामाजिकस्य वा शृङ्गारादिपर्यन्तं प्रसृमरां संवित्संततिम्, क्षेत्रान्तरप्रसिद्धमर्थभेदेन शब्दभेदमिव विषयभेदेन व्यापारभेदं मुधैवात्र मनसि कृत्य।

ननु शब्दः संकेतसहाय एवार्थविशेषं प्रतिपादयति, नास्ति चार्थान्तरे तस्य संकेतः। तत् कथमसौ सक्रामोऽपि तत् स्प्रष्टुमीशेत ? सत्यम्; लोष्ठघातेन जनितस्तरंगस्तरंगान्तरं यदम्भसि जनयति तत्र तरंगान्तरेणापि किं लोष्ठघातस्यास्य संपर्क इष्यते ? नेष्यते चेत्, किं तत्र कारणम् ? लोष्ठघातजनितस्तरंग इति चेत् तर्हि तरंग एव तरंगान्तरस्य जनकः, न लोष्ठघातव्यापारः। ततश्चाभिधया वेदितादर्थाद् यदर्थान्तरप्रतिपत्तिरभिप्रसूयते तत्रापि नास्त्येव कारणीभूतार्थप्रतिपत्तिप्रसुवः शब्दशक्तेस्तन्त्रताया अङ्गीकारगौरवस्यावश्यकत्वम्। नास्ति च ततो विरम्यव्यापाराभावसिद्धान्तमभ्युपेत्य व्यापारान्तरकल्पनायाः शब्दगतत्वेनैवाङ्गीकृतेरावश्यकता। अत एव मुकुलभट्टैरर्थस्यैवार्थान्तरावगतौ हेतुत्वमूरीक्रियते, न तु शब्दस्य। यदुक्तमेतैरभिधावृत्तिमातृकाया आरम्भ एव—

'शब्दव्यापारतो' यस्य प्रतीतिस्तस्य मुख्यता।
अर्थावसेयस्य पुनर्लक्ष्यमाणत्वमुच्यते" ॥ इति।

अत एव च मम्मटभट्टोऽपि लक्षणाया आरोपितत्वमेव शब्दे स्वीकरोति--'लक्षणाऽऽरोपिता क्रिया' इति लक्षणालक्षणकारिकायाम्। अवोचाम च वयमपि -[१]'रसस्य शाब्दत्वम्' इति स्वसन्दर्भेऽस्यैव वैज्ञानिकत्वम्।

किं च लोके लोष्ठपातादिप्रसूता ये तरङ्गादयः पदार्थाः, ते भौतिका एव। शब्दबोधावगमितानां तु तेषां-नैषा स्थितिः। ते हि सर्वात्मना बौद्धा एव। बुद्धिरप्येषा न कवेः, तस्य वृत्तत्वात्, विद्यमानस्यापि वा चर्वणाकालेऽनुपस्थितत्वात्। सामाजिकस्यैव सा, तस्यैव रसयितृत्वेनोपस्थितत्वात्। तर्हि द्वितयमपि तद् बुद्धिवीचिभूतमेव यदुत्पादयति यच्चोत्पाद्यते। एष च बुद्धेर्बुद्ध्यन्तरोत्पादो बोद्धुरन्तःकरण एव भवति, न नभसि शब्दाश्रये, येन तदर्थं कल्पितस्य व्यापारस्य शब्दगतत्वमूरीक्रियेत। बौद्धिकश्चेदेष व्यापारः, किं तत्र विश्रान्तिकल्पनया विरामजल्पनया वा। रसभोगावधि तस्य धानुष्क-प्रक्षिप्त-शिलीमुखव्यापारस्येव दीर्घदीर्घतरत्वस्यैव कल्पयितुमुचितत्वात्। ततश्च युक्तमेवोच्यते--

प्रतिपाद्यस्य विश्रान्तिरपेक्षापूरणाद् यदि।
वक्तुर्विवक्षिताप्राप्तेरविश्रान्तिर्न वा कथम्॥ इति।

अस्य च पार्यन्तिकार्थोपलब्ध्यवधि प्रधावतो मानसस्य व्यापारस्य तात्पर्यमिति युज्यत एवाभिधानम्, किन्तु को नामास्य शाब्दिकेनाभिधात्मना श्रीमतां बहुमानपात्रेण व्यापारेणाभेदः, येनाभिहितान्वयान्विताभिधानिनोः केशाकेशि प्रवर्तेत? अन्या हि शब्दबोधजनिता संकेतसहाया साधनीभूतार्थमात्रविलेशया अभिधानाम्नी शेमुषीमूषी, अन्या च तादृशार्था-कशाभिघातप्रपलायिता अर्थान्तरशतावबोधराजपथचतुरांगिका प्रतिभापरपर्याया सुमतितुरंगिका। क्व च नामास्य विधिनिषेधौपयिकप्रामाण्यनिर्भरमीमांसाशास्त्रप्रसिद्धेन शब्दोपात्तत्वावच्छिन्नेन विधेयापरपर्यायेणाभिधीयमानेन तात्पर्येण सम्बन्धः? पृथगेव हि मुख्यार्थप्रमुखाच्छास्त्रात् प्रतीयमानप्रमुखं कान्तासम्मितौपदेशिकं काव्यम्। काव्यस्य च तात्पर्यमत्र विचार्यते, न शास्त्रस्य! ततः कीदृशी तत्र देवानां प्रियता। तेनात्र मा भूद् विनायकरिरचयिषायां वानररचनोद्योगः। ततश्च—

तात्पर्यनाम्नि नभसि प्रतिभोषसा यः संवित्प्रकाश उपदीक्रियते महद्भ्यः।
अर्थान्तराणि तत एव बहिस्स्थितानीवाऽऽत्मस्थितान्यपि भवन्ति चितिं स्पृशन्ति[२]॥
विश्रान्तिरत्र ननु का ननु को विरामः संवित्सुपर्णदयितास्ति यदा प्रडीना।
आत्म-प्रकाश-विशदीकृतकंचुकायां सत्यां चितौ निखिलचेत्यविभूषितायाम्॥ इति केवलं निवेदयामः।

---

१. सागरिकायाः ७।२ अंके प्रकाशितोऽस्माकं व्यञ्जनायाः शब्दवृत्तित्वघ्नो लेखः।
२. चितिस्पर्श एव हि रत्यादीनां चेत्यानां रसत्वलाभः।

# सदाचारस्मृतिसमालोचनम्

डा० अशोकशास्त्री

पुराणेतिहासविभागाध्यक्षः, वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी

दर्शनशास्त्रपारावारीणैः सह स्मार्तानां सान्द्रः कोऽपि सम्बन्धो नास्तीति सर्वेषां विदितम्। उभयोरहिनकुलवद् विरोधो मास्तु न प्रीतिकरोऽपि सम्बन्धः। अत्र विषये श्रीनाथाचार्यचूडामणेस्तात्पर्यदीपिकाग्रन्थस्योपक्रमोक्तश्लोकं प्रति दृष्टिराक्रष्टुं शक्यते। तत्र श्रीनाथाचार्येणोच्यते यद् दार्शनिकाः स्वभावतयैव स्मृतिशास्त्रं प्रति नानुरज्यन्त [1]इति। प्रथितनामानो दार्शनिका अथ चाप्रतिद्वन्द्विनः स्मार्ताश्चेदृशा मनीषिणोऽस्मद्देशे सर्वथाऽजनिष्यन्त इति नैवोच्यतेऽस्माभिः, परन्तु तेषां संख्या न गणनामर्हति। सनातनधर्मावलम्बिनां दर्शनशास्त्राणि षट् प्रसिद्धानि, किन्तु षण्णां दर्शनशास्त्रप्रणेतॄणाम् मध्य एकोऽपि स्मृतिशास्त्रप्रवीणोऽसाधारणोऽधिगतार्थो वाऽऽसीदिति न श्रूयते। कणादकपिलप्रभृतयो मुनयोऽतिनिगूढदार्शनिकरहस्याविष्करणे निपुणा इत्यर्हत्तमाः। ते खलु मन्वत्रिप्रमुखवद् धर्मशास्त्रं न प्रणीतवन्तः, धर्मशास्त्रस्य व्याख्यातारो वा नासन्। उपरिष्टाद् युगे रामानुजः, शङ्करः, उदयनः, एवमन्ये च तथैव न विशेषवक्तव्यतामर्हन्ति। आनन्दतीर्थमध्वस्याप्युल्लिखितानां दार्शनिकानां समानवृत्तित्वम्। इदं खलु साङ्ख्यवेदान्तवत् प्रसारमलभमानमपि नानवगणनार्हम्। न्यायवैशेषिकादिदर्शनवत् सर्वजनस्वीकृतेरविषयोऽपि माध्वदर्शनं तदवस्थितिकाले बहुलं प्रचारं लेभे, इत्यत्र सौरपुराणमेव प्रमाणम्। तत्र माध्वदर्शनस्यासारत्वख्यापनाय कति नाम चेष्टा न कृताः। मध्वाचार्यचरित्रं जुगुप्सितरूपेणाङ्कितम्, तस्मिन् समधिकं विषमुद्वान्तम्। प्रायशः सर्वेषु स्थलेषु सौरपुराणकृदत्र विषये पालनीयां सभ्यतामप्यतिक्रान्तवान्। तदानीं मध्वाचार्यपथिकाः प्रबलसम्प्रदायभाजो भवितुं प्रावर्तन्त। भारतस्य विविधेषु प्रदेशेषु ते स्वप्रभावं वितनितुमशक्नुवंश्च। तेषां [प्र]तिष्ठां व्याहन्तुमेवायं प्रत्यनीकीभूतसम्प्रदायानां व्यापार इव बोधनेनापि बोद्धुं शक्यते।

---

१. गजनिमीलनवन्न मनश्चिरं दधति दर्शनतत्त्वविदः स्मृतौ।
पदपदार्थविचारजडाः परं तदिह शिष्यहिताय मम श्रमः॥
—( श्रीनाथाचार्यचूडामणेः, तात्पर्यदीपिका )

आधुनिके पण्डितसमाजे केषाञ्चिदयमेव विश्वासो यत् प्रवरदार्शनिकान्तरवद् मध्वाचार्यस्यापि स्मृतिशास्त्रे तादृशी व्युत्पत्तिर्नासीदिति। परमस्य सिद्धान्तस्य मूले एकापि युक्तिर्नास्ति, अन्यतश्च मध्वाचार्यप्रणीतः कोऽपि धर्मग्रन्थो नोपलभ्यते। किन्तु 'कलिकाता एशियाटिक सोसाइटी' नामधेयपुस्तकागारे[१] 'सदाचारस्मृतिः' नामकमेकं पुस्तकमन्वेषणेन लब्धम्। ग्रन्थोऽयमानन्दतीर्थमध्वाचार्येण व्यरचीति तत्र नास्ति सन्देहलवोऽपि। यतो ह्यस्य समाप्तौ वाक्यशेषः 'इति श्रीमदानन्दतीर्थ-भगवत्पादविरचिता सदाचारस्मृतिः समाप्ता' इति[२]। अस्य चत्वारिंशत्तमः श्लोकोऽप्यत्र प्रमाणायते। तथा हि—

आनन्दतीर्थमुनिना व्यासवाक्यसमुद्धृतिः।
सदाचारस्य विषये कृता संक्षेपतः शुभा॥

अस्माद्धेतोर्महामहोपाध्यायो हरप्रसादशास्त्रिमहोदय उक्तवान्, "इदं नाम आनन्दतीर्थेन प्रणीतं सदाचारविषये संक्षिप्तं पुस्तकम्। अयमानन्दतीर्थस्तु माध्ववैष्णवसम्प्रदायस्य प्रतिष्ठाता। व्यासवाक्यानुसारतः गृहीतमिदम्"[३]। सुष्ठूक्तं शास्त्रिमहोदयेन यदन्येषु प्रसिद्धेषु ग्रन्थेषु केष्वप्येतादृश्यां वार्तायामुपलब्धायामपीयं मध्वाचार्यकृतिरित्यत्र नास्ति विप्रतिपत्तिः। राजेन्द्रलालमित्रमहोदयविरचितायां बीकानेराधिपतेर्ग्रन्थागारे स्थापितायां संस्कृतपुस्तिकासंवादपत्रिकायाम् आलोचितायां दृश्यते यत् तत्र सदाचारसंज्ञकः स्मृतिग्रन्थोऽस्ति, तस्यान्तिमं वाक्यमित्थम्।

तथैव मत्कृता टीका बालबुद्धया तु साधवः।
न्यूनाधिक्यं च यत् तत्र क्षमयन्तु दयान्विताः॥
अनेन प्रीयतां श्रीमद्भगवान् बादरायणः।
तद्भक्तप्रवरः श्रीमान् पूर्णबोधः प्रसीदताम्॥

इति श्रीमदानन्दतीर्थ-भगवत्पादाचार्यविरचितः सदाचारः सम्पूर्णः।

अतो हि विचाराज्ज्ञायते यत् सदाचारग्रन्थः सदाचारस्मृतिग्रन्थो वा तदानीं प्रचलित आसीत्। तस्य च प्रणेता श्रीमदानन्दतीर्थो मध्वः। एष ग्रन्थो बाहुल्येन प्रचलित आसीत्।

---

१. ग्रन्थसंख्या जी० १०५०३।

२. सदाचारस्मृतिः, पृ० ७ ख।

३. This is a short treatise on sadācāra compiled by आनन्दतीर्थ, the founder of the माध्व school of vaiṣṇavas from vyāsa's works.

तथा मध्वाचार्यसम्प्रदायैः परिगृहीत इति निःसन्देहम्। अन्येषामपि सम्प्रदायानामानादरणीयोऽसमादृतो वा आसीदित्यपि न वाच्यम्। यतो हि तदानीं कस्मिन्नपि ग्रन्थे जनसमूहैरनादृतेऽनङ्गीकृते वा तट्टीकालिखनं मुधैव स्यात्। जनप्रियतैव ग्रन्थस्य टीकाटिप्पण्योः प्रधानम् निदानम्। दिष्ट्याऽस्य सदाचारस्मृतिग्रन्थस्यापि कामपि टीकां वयमन्वेषणेन लब्धुं शक्या अभूम। अनेन प्रसङ्गेन बीकानेराधिपतेर्ग्रन्थागारे रक्षितस्य संस्कृतपुस्तकसञ्चयस्य परिगणनग्रन्थे ६६६ संख्यकं पुस्तकस्य सुधीसभाजेन दर्शनं प्रति यत्नमनुरुन्ध्मः। अत्रास्य ग्रन्थस्यान्तिमं वाक्यमपि द्रष्टव्यम्। यथा--"इति श्रीमद्धितार्थसूरिसूनुः नारायणपण्डिताचार्यविरचिता सदाचारस्मृतिटीका समाप्ता" इति। एवं चेदिदमधिगतं यद् हितार्थसूरिनामधेयस्य कस्यचित् पुत्र आचार्यनारायणपण्डितोऽस्य सदाचारस्मृतिग्रन्थस्य टीकाकृदिति। पुस्तकपरिचयप्रसङ्गात् तत्त्वविन्मित्रमहोदयः सत्यमेवाभिहितवान्—"हितार्थसूरिः" इत्यस्य पुत्रः कश्चित् नारायणपण्डित इमां टीकां विरचितवान्" इति।

अयं हितार्थसूरिः को वा, कस्य पुत्रो वा तथा नारायणपण्डितो वा कुत्रत्यः, किंकालिक इत्यत्र किमपि न ज्ञातुं शक्यते। तथापि एतावन्मात्रं वक्तुं शक्यते यदिमे माध्वमार्गावलम्बिनः शक्तिविशेषशालिनश्च लेखका इति। मङ्गलाचरणश्लोकेभ्यष्टीकाकृतोऽनन्यसामान्यप्रतिभावत्त्वस्यापि ज्ञानं वयमुपलभामहे। यदुक्तं तत्र तेन—

आम्नायैरुदितानि तानि बहुधा वैतानिकादीनि सत्-
कर्माणि प्रविधाय तत्फलभुजो वाञ्छाविदामाज्ञया ; (?)
सन्तः श्रीकरलालिते हरिशिरोभूषाम्बुपूराकरे
मोदन्ते विनिवेद्य यस्य चरणाम्भोजे तमीशं भजे ॥

यद्यपि मध्वाचार्यपादा अस्य सदाचारस्मृतिनाम्नो ग्रन्थस्य कान्यपि पर्वाणि वा, अध्यायविभागान् वा न कृतवन्तस्तथाप्यालोचितविषयाणां पार्थक्यात् ग्रन्थमिमं स्थूलतो द्विधा विभक्तुं वयं पारयेम। तत्र प्रथमे भागे आचारविषयकः परामर्शः, द्वितीये च प्रसङ्गात् दार्शनिकतत्त्वं विराजते। परं ग्रन्थेऽस्मिन् कार्त्स्न्येनालोचितेऽयत्नेनैवावगम्यते यदियं सर्वथा वैष्णवी स्मृतिरिति। कुत्राप्यंशे विष्णुं विना देवतान्तरस्य नाम नोदलेखि। सर्वत्रैव विष्णुपूजा विष्णुध्यानं विष्णूपासनमेव विवृतम्। द्वितीये तु भागे दार्शनिकतत्त्वविमर्शप्रसङ्गे सर्वत्रैव

५. A commentary on the work by Nārāyaṇa Paṇḍita, son of Hitārtha Suri.

श्रीविष्णोर्जयध्वनिः श्रूयते। सर्वदैव श्रीविष्णोर्नामस्मरणं मननं निदिध्यासनं कर्तव्यम्, कदाऽपि स न विस्मर्तव्य इति[1]। अन्तरिन्द्रियैर्बहिरिन्द्रियैर्वा ग्राह्याणि स्थूलानि सूक्ष्माणि वा सर्वाण्येव वस्तूनि श्रीभगवते नारायणाय समर्पणीयानि। बाह्यज्ञानविषयीभूताः पदार्था अन्तर्बुद्धिग्राह्या विषयाश्च श्रीनारायणाय प्रदेयाः[2]। एकत्रांशे सर्वथाऽप्रासंगिकोऽपि 'ध्येयः सदा सवितृमण्डलमध्यवर्ती' इति श्रीनारायणध्यानमन्त्रोऽयं समुपन्यस्तः। ग्रन्थकारस्येदृशेऽसकृद् विष्णोः कृष्णस्य नामोल्लेखे हेतुर्विचार्यमाणः 'कृष्णैकप्रवणताऽहैतुकः कृष्णानुराग एव' इत्यत्र नास्ति कोऽपि सन्देहः। विष्णौ श्रद्धातिशयात् ग्रन्थकारः क्वचिदुक्तवान् यत् सर्वेषां शरणं रुद्रः, ब्रह्मा तु रुद्रस्य संश्रयः, स ब्रह्मा विष्णुमाश्रित्य स्थितो विष्णुर्न कञ्चन[3]। रमाविरिञ्चिप्रभृतीनाम् उपजीव्यो विष्णुरेव[4]। श्रीविष्णुर्गायत्र्या अपि महीयान् इत्यपि निरधारि[5]। स विष्णुर्महाविक्रमशाली पुरुषोत्तम इति[6]। स्मर्तव्य. सर्वदा हरिः, न केवलं तथा. विष्णोः पारिषदा अपि निरन्तरं ध्येयाः पूज्याः प्रणम्याश्च[7]। अनेन प्रसङ्गेन ग्रन्थकृत् श्रीमद्भगवद्गीतोक्तम् "मन्मना भव मद्भक्तः" इत्यादिकं श्लोकमुद्धृत्य स्वमतं बलवत् प्रतिष्ठातुं प्रायस्यत। तथापि स्थाने स्थाने समधिकं समुन्नततमं दार्शनिकतत्त्वचिन्तानिर्गलितो मौलिकः श्लोको नास्तीति वक्तुं नोचितम्। परमिह तादृग् वैदिकमार्गाविरोधिपरमवैष्णवग्रन्थरचयिताऽपि तदानीन्तन-तान्त्रिकधर्मप्रसाराघाता-दात्मानं रक्षितुं नाशकत्। श्रीमध्वाचार्यस्तान्त्रिकवैष्णव इति वादस्य प्रमाणं तादृशं न कुत्राप्युपलभ्यते, तथापि तदीयसदाचारस्मृतिग्रन्थस्यैकत्र स तन्त्रशास्त्रमभ्युपजगाम; तथा यथोचितं गौरवमपि तस्मै प्रदातुं न विमुखोऽभवत्।

वस्तुतस्त्वल्पायाससाध्यमचिरफलप्रसवितारं तान्त्रिकक्रियाकलापं प्रति प्रयत्नशीलानां जनसामान्यानां मर्मणि तदानीं वैष्णवं वा, शैवं वा तन्त्रं निरवातमासीत्। एवं दशायां बलात् तदनङ्गीकृत्य मध्वाचार्यः स्वामदूरदर्शितां न प्राख्यापयत्, इदमतीव सौभाग्यम्। तन्त्रे तु

---

१. स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित्— सदाचारस्मृतिः, पृ० ६ क

२. कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वानुसृतस्वभावम्।
करोति यद्यत् सकलं परस्मै नारायणायेति समर्पयेत् तत्॥ सदाचारस्मृतिः, पृ० ४ ख

३. रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः।
ब्रह्मा मामाश्रितो नित्यं नाहं कञ्चिदुपाश्रितः॥ —सदाचारस्मृतिः, पृ० ५ क

४. रमाब्रह्मादयस्तस्य परिवारतयैव तु। — ,, ,, पृ० ६ ख

५. गायत्र्यास्त्रिगुणं विष्णुं ध्यायन्नष्टाक्षरं जपेत्। — ,, ,, पृ० ३ क

६. सर्वोत्तमं विष्णुं। — ,, ,, पृ० ३ ख

७. प्रणम्य..................................हरिपार्षदान्। — ,, ,, पृ० ३ ख

